तया 'रचितप्रियः' जनितरतसुखः । वहवः—प्रचुराः शौर्यसौभाग्यादयो गुणा यस्य स बहुगुणः ॥

इत्यनिरुद्धवर्णनम् ॥ १३ ॥

अथ वागुरिकवर्णनम्—

हे महाराज! अविश्रान्तप्रवर्त्तितसत्रागाराजिरयथासमीहितावाप्तभोजनसन्तुष्टतटिक–कार्पटिक–मौतिक–तापस–रक्तभिक्षु–श्वेतभिक्षु-विप्रप्रभृतिदीनानाथदत्ताऽऽशीर्वादजयजयध्वनिकोलाहलश्रवणवधिरितश्रवणविवरानूरुसारथिमन्दमन्दप्रयाणरथगवाक्षनिपण्णदिनकरनिरीक्ष्यमाणमुखकमल! श्रीचौलुक्यनः! सम्बोधनं पूर्ववत् । हे ए! कामसुभग! 'श्वरेण' श्वभिः—श्वानैः राजते यः स श्वरः—वागुरिकस्तेन सह साम्यमालम्ब्यतेऽयं विहारः । वागुरिकः कीदृशः? 'गम्' आखेटकाय वने गन्ता । 'भीरः' भयप्रदः 'श्रुतिभिः' धनुर्गुणटणत्कारश्रवणैः ।'सदा' सर्वदा सखण्डनेन वा उपलक्षितः'चरणतः' वक्रीकृतचरणन्यासात्, यद्वा 'चरणतः' इतस्ततश्चङ्क्रमणात् 'प्राप्तप्रतिष्ठः' प्रकर्षेण आप्ते—प्राप्ते मृगादौ प्रतिष्ठते मारणायेति प्राप्तप्रतिष्ठः । 'अदयः' निर्दयः पशुव्यापादने । 'सत्कान्तारचितप्रियः' सति—बहुश्वापदसद्भावात् शोभने कान्तारे—ऽरण्ये चितं—उपचितं प्रियं—मृगव्यापादनादिकमभिलषितं यस्य सः । बहुगुणः—प्रचुररज्जुपरिग्रहः, तन्मयत्वाद् वागुराणाम् ॥

इति वागुरिकवर्णमम् ॥ १४ ॥

अथ पल्लीपतिवर्णनम्—

हे श्रीचौलुक्यनरपते! 'ईश्वरेण' इशब्देन गिरिकुहरमभिधीयते,

तस्य तत्र वा ईश्वरः—पल्लीपतिस्तेन सह साम्यमालम्बतेऽयं विहारः। पल्लीपतिः कीदृशः? 'गम्भीरः' गमं—धाट्यागमनं कुर्वते तमाचक्षते वा इत्यादि। रूपसिद्धिः पूर्ववत्। तेन गमः—पल्लीभङ्गप्रवृत्ताश्वराः इत्यर्थः तेषां भियं राति—ददाति गम्भीरः, रूपसिद्धिः पूर्ववत्, पल्लीभङ्गप्रवृत्तानां भयप्रद इत्यर्थः। 'श्रुतिभिः' सततशृङ्गकवादनश्रवणैः 'सदा च' सर्वकालं 'रणतः' संग्रामात् 'प्राप्तप्रतिष्ठोदयः' लब्धमाहात्म्योन्नतिः 'सत्कान्तारचितप्रियः' सतां कान्ताः—कान्तिगुणयुक्ताः स्त्रियः ताभिः स हठात् समानीताभिः 'रचितप्रियः' जनितदृष्टिसन्तोषः। अयमभिप्रायः—सतां कान्तास्तं न वहुमन्यन्ते, ततोऽसौ वाञ्छितसुरताभावात् दृष्टिनिरीक्षणमात्रमप्युत्सवं मन्यते। 'वहुगुणः' शवरेषु समधिकशौर्यगुणः॥

इति पल्लीपतिवर्णनम्॥ १५॥

## अथ चकोरवर्णनम्—

हे श्रीचौलुक्यनर! 'ईश्वरेण' ईशब्देन शशधरकिरणा अभिधीयंते, तेषु शु—सुष्टु यथाभवत्येवं इयर्ति यः स ईश्वरः। शु पूजायामव्ययमस्ति, तेन ईश्वरेण—चकोरेण सह साम्यमालम्बतेऽयं विहारः। चकोरः कीदृशः? गमं—गमनं करोति इतस्ततः किरणपानार्थम्, रूपसिद्धिः पूर्ववत्। गम्—गन्ता शशधरकिरणकलापकवलनार्थं नभसीत्यर्थः। तदेवमभिधीयते। कामिर्गन्ता? 'भीरः श्रुतिभिः' भानि—नक्षत्राणि विद्यन्ते यस्य स भीः—चन्द्रः तस्य ईः—श्रीः—चन्द्रिका तस्या रसस्तं कुर्वन्ति आचक्षते वा इत्यादि। रूपसिद्धिः पूर्ववत्। भीराश्च

ताः श्रुतयर्थ-श्रवणानि ताभिः चन्द्रचन्द्रिकाप्रतिपादनश्रवणैः 'सदा' सर्वदा 'चरणतः' चंक्रमणात् 'चर् गतिभक्षणयोः' भक्षणाद्वा 'प्राप्तप्रतिष्ठोदयः' प्राप्तप्रतिष्ठः उत्-ऊर्ध्वं गमनं यस्य सः, किरणग्रहणायं उच्चैश्चञ्चुपुटस्य तस्य गमनदर्शनात् । सत्कान्ताः-चकोर्यः ताभिः रचितप्रियः । बहवो-विविधा गुणाः विषदूषितान्नसूचनादयः कार्ष्ण्यादयो वा धर्मा यस्य सः । तथा चोक्तम्—

चकोरस्य विरज्येते नयने विषदर्शनात् ।

'बहुगुणः' पक्षिषु प्रचुरगुणः ॥

इति चकोरवर्णनम् ॥ १६ ॥

अथ नागराजवर्णनम्—

श्रीचौलुक्यनरतिलक ! ईकारेण भुजगा अभिधीयन्ते, तेषां ईश्वरो नागराजः तेन सह साम्यमालम्बतेऽयं विहारः । गम्भीरः 'श्रुतिभिः' कर्णैः फणासहस्रवर्त्तिभिर्दक्कर्णैः इत्यर्थः । 'सदा' सर्वदा 'अचरणाः' सर्पास्तेभ्योऽचरणतः 'प्राप्तप्रतिष्ठः' पाताले लब्धप्रतिष्ठः 'दयः' भक्तानां वाञ्छितार्थदाता । सत्कान्ताः-नागाङ्गनाः ताभिः 'रचितप्रियः' निर्मिताह्लादः 'बहुगुणः' प्रचुरगुणः ॥

इति नागराजवर्णनम् ॥ १७ ॥

अथ सुरपतिवर्णनम्—

हे चौलुक्यनः : 'एश्वरेण' अकारेण अजरा-निर्जरा देवा अभिधीयन्ते, तेषां ईश्वरः-सुरपतिः तेन सह साम्यमालम्बतेऽयं विहारः । सुरपतिः कीदृशः ? 'गम्भीरः' 'युवर्णवृदृवशरणगमृद्ग्रहः' ( सिद्ध०

५-३-२८ ) इति अलि गमः—गमनं—देवान् प्रति यात्रा, तं कुर्वन्तीति 'णिज् बहुलं नाम्नः कृगादिषु' ( सिद्ध० ३-४-४२ ) इति णिचि 'त्रन्त्यस्वरादेः' ( सिद्ध ७ । ४ । ४३ ) इत्यन्तलोपे ततः क्विपि 'णेरनिटि' (सिद्ध ४ । ३ । ८३) इति णिलोपे गमः— दानवाः तेषां भियं राति—ददाति । काभिः ? 'श्रुतिभिः' स्फूर्जथु-श्रवणैः । सह दा—खण्डनेन वर्तते यः स सदा—दानवेन्द्रः तेन सह 'रणतः' सङ्ग्रामात् 'प्राप्तप्रतिष्ठोदयः' प्राप्तप्रतिष्ठः—लब्धस्वर्गमाहात्म्य उदयः—साम्राज्यं यस्य सः। सत्कान्ताः—शचीरम्भाप्रभृतयो देव्यस्ताभिः 'रचितप्रियः' निर्मिताभिप्रेतवस्तु 'बहुगुणः' युद्धावसरेऽनन्तगुणरूप-धारीत्यर्थः ॥ इति सुरपतिवर्णनम् ॥१८॥

**अथ वैश्वानरवर्णनम्—**

हे श्रीचौलुक्य ! न—नैव 'रेश्वरेण' रः—वह्निः स चासौ ईश्वर-स्तेन रेश्वरेण सह साम्यमालम्बतेऽयं विहारः। 'श्रुतिभिः' विविधाऽऽ-तोद्यनादैर्गम्भीरः, अयं तु न तथा, आतोद्यदाहहेतुत्वादेतस्य । तथायं विहारः 'सदाचरणतः' शोभनपञ्चप्रकाराचारात् श्री**हेमचन्द्रसूरेः** सका-शात् प्राप्तः प्रतिष्ठया—श्री**पार्श्वनाथ**बिम्बप्रतिष्ठया उदयः—महोदयो येन सः, वह्निस्तु न तथा, चपलतरज्वालाजालजटालत्वात् अप्र-तिष्ठ इत्यर्थः । तथाऽयं विहारः सत्काः—सम्बन्धिनो येऽन्ताः—प्रान्ता-स्तैः आ—समन्तात् 'रचितप्रियः' जनिताह्लादः, वह्निस्तु न तथा । अत एवायं बहुगुणः, वह्निः पुनरबहुगुणः इति । ततो विहारस्तेन साम्यं नालम्बते किन्तु समधिक एव ॥

इति वह्निवर्णनम् ॥ १९ ॥

अथ कृतान्तवर्णनम्—

हे श्रीचौलुक्य ! चौलुक्येषु श्रीपात्र ! 'नरेश्वरेण' नराणां—उपलक्षणत्वात् सर्वजीवानाम् आ इति परितापकरणं—मारणं प्राणानां शरीरान्तरसङ्क्रामणं तत्र ईश्वरः—कृतान्तस्तेन सह साम्यमालम्बतेऽयं विहारः। कीदृशः कृतान्तः ? ' गम् ' बालतरुणवृद्धेष्वस्खलितगतिः, त्रिभुवनेऽपीत्यर्थः। तथा ' भीरः ' भयप्रदः । कामिः ? ' श्रुतिभिः ' आकर्णनैः । सदं—सखण्डनं यत् आचरणं—चेष्टितं तेन तस्—क्षयः 'तसूच् दसूच् उपक्षये' इति धातोर्भावे ' क्रुत्सम्पदादिभ्यः ' ( सिद्ध. ५–३–११४ ) इति क्विबन्तस्य प्रयोगः तया तसा प्राप्तप्रतिष्ठः, उदयः—उन्नतिर्यस्य सः । सतां—पुरुषाणां कान्तानां—स्त्रीणां न रचितं प्रियं—अभिप्रेतं येन सः । सर्वजगतोऽपि निधनमित्यनिष्टः, अत एव अबहुगुणः—निर्गुणः ॥

इति कृतान्तवर्णनम् ॥२०॥

अथ राक्षसवर्णनम्—

हे श्रीचौलुक्यनः ! सम्बोधनमिदम् । ' एश्वरेण ' एकारो निशि गदितः ततश्च तस्यां शु—सुष्ठु इयर्ति 'अच्' ( सिद्ध० ५ । १ । ४९ ) इति अच् 'नामिनो गुणोऽक्ङिति' (सिद्ध. ४।३।१) इति गुणे 'इवर्णादेरस्वे स्वरे यवरलम्' ( सिद्ध. १ । २२ । १ ) इति शोरुकारस्य वत्वे च एश्वरः—नक्तञ्चरः तेन सह साम्यमालम्बतेऽयं विहारः । यः कथम्भूतो नक्तञ्चरः ? ' गम् ' सर्वत्र गन्ता । 'भीरः' भयप्रदः, 'श्रुतिभिः' आकर्णनैरपि । 'सदं' सखण्डनं यदाचरणं—चङ्क्रमणं आ—समन्तात् भक्षणं वा तस्मादपि भीरः । प्रगता आप्तेषु

प्रतिष्ठा यस्य सः। 'अदयः' निर्दयः । सन्ति—सल्लक्षणानि यानि कानि—मस्तकानि तेषां अन्ताः—पर्यन्ताः तैः आरचितं प्रियं येन सः। 'अबहुगुणः' शेषसुरापेक्षया ॥

इति राक्षसवर्णनम् ॥ २१ ॥

**अथ वरुणवर्णनम्—**

तथा हे श्रीचौलुक्यनर! ईशब्देन वारि प्रतिपाद्यते, ततस्तस्य ईश्वरेण—जलाधिदेवेन वरुणेन सह साम्यमालम्बतेऽयं विहारः। कीदृशो वरुणः? 'गम्भीरः' काभिः? 'श्रुतिभिः' जलध्वनिश्रवणैः जलाधिदैवतत्वात् तस्य। 'सदा' सर्वदा 'अचरणतः' असञ्चारात् पश्चिमायामेव दिशि लीनत्वात् प्राप्तप्रतिष्ठः। 'दयः' दानशीलः । सत्कान्ताः—अन्तःपुरवारवध्वस्ताभिः 'रचितप्रियः' जनितसन्तोषः। 'बहुगुणः' सकलगुणभूषितः ॥

इति वरुणवर्णनम् ॥ २२ ॥

**अथ वायुवर्णनम्—**

हे श्रीचौलुक्यनः! 'एश्वरेण' एकारेण गमनमभिधीयते, तत्र शु—सुष्ठु अस्खलितप्रसरतया इयर्ति एश्वरः—सततगतिः पवनस्तेन सह साम्यमालम्बतेऽयं विहारः। कीदृशः पवनः? गम्भीरः 'श्रुतिभिः' प्रतिशब्दश्रवणैः। सदा—सर्वदा चरणतः—सञ्चरणात् प्राप्तप्रतिष्ठः—सदागतिरिति प्रतिष्ठितः स चासौ उदयश्च उत्—ऊर्ध्वं अयः—गमनं यस्य सः, पताकादौ तथा तद्गमनलिङ्गदर्शनात् । सत्—शोभनं यथा भवति एवम्—कान्तारे—अरण्ये चितं उपचयप्राप्तं प्रियं यस्य सः । बहवः सौरभ्यप्रभृतयो गुणा यस्य स बहुगुणः ॥

इति वायुवर्णनम् ॥ २३ ॥

रुद्रवर्णनं पूर्वं कृतमेव । इति सुरपतिप्रभृतिदिक्पालवर्णनम् ॥

अथ कमठवर्णनम्—

हे चौलुक्यनः ! 'एश्वरेण' अकारः कमठवाचकः स चासौ ईश्वरश्च तेन सह साम्यमालम्बतेऽयं विहारः । कीदृशः कमठः ? 'गम्भीरः' गाम्भीर्यभाक् 'श्रुतिभिः' वेदोद्गारैः, वेदे हि "पृथ्वी कमठेन धृता" इत्यस्ति श्रुतिः, स तु गम्भीरतया हर्षविषादरहित इत्यर्थः। सदा–सर्वदा यावल्लोकस्थितिः 'चरणतः' चरणेभ्यः 'प्राप्तप्रतिष्ठोदयः' लब्धप्रतिष्ठोन्नतिः । सत्–शोभनं यत् कं–पानीयं तदन्ते–तत्पर्यन्ते आरचितं प्रियं इतस्ततः परिसर्पणं येन सः । बहवो महाभराक्रान्तपृथ्वीधारणादयो गुणा यस्य सः । यद्वा 'गम्भीरः' अलब्धमध्यः करोटेरन्तरतीव गोपितावयवः 'श्रुतिभिः' वेदैरुपलक्षितः सदा–सर्वदा 'चरणतः' चरणान्तराध्यायविशेषाः तेभ्यः सकाशात् प्राप्तप्रतिष्ठः । यद्वा 'चरणतः' चरणचतुष्टयबलात् प्रतिष्ठितः । शोभनेन कान्तेन–मस्तकपर्यन्तेन अस्य–प्रजापतेः रचितं प्रियं येन सः, प्रजापतिप्रणीतसृष्टेराधारभूताया धराया अभ्युद्धारात् । अत एव शेषकमठेषु अयमेव बहुगुणः समधिकबलत्वादेतस्य ॥

इति कमठवर्णनम् ॥ २४ ॥

अथ पातालवर्णनम्—

हे श्रीचौलुक्यनर ! 'ईश्वरेण' ईशब्देन भुजगानां फणामणिरश्मयोऽभिधीयन्ते, ततश्च तैरुपलक्षितः पाताले प्रभुर्यत्र तत् पातालं तेन सह साम्यमालम्बतेऽयं विहारः । कीदृशः पातालभागः ? 'गम्भीरः' अलब्धमध्यः । काभिः ? 'श्रुतिभिः' परमाधार्मिकदर्थ्यमाननारककुलकोलाहलश्रवणैः । सदा–सर्वदा अचरणाः–सर्पाः तेभ्यः

प्रकर्षेण आप्तप्रतिष्ठः । दशब्देन कलत्राण्यभिधीयन्ते, दानि—नागाङ्गनाः याः—श्रिय इव यत्र स दयः । सन्ति—शोभनानि कानि—जलानि येषु ते सत्काः ते च ते अन्ताः—पर्यन्ताः तैः रचितप्रियः—जनितसन्तोषः । 'वहुगुणः' प्रभूतगुणः मर्त्यलोकापेक्षया ॥

इति पातालवर्णनम् ॥ २५ ॥

## अथ मर्त्यलोकवर्णनम्—

हे श्रीचौलुक्य! 'नरेश्वरेण' नराणां ई—रचना तस्यां ईश्वरः—प्रभुः समर्थः, मर्त्यलोक एव तत्र तेषामुत्पत्तेः, तेन साम्यमालम्बतेऽयं विहारः । कीदृशः मर्त्यलोकः? गम्भीरः 'श्रुतिभिः' सततसञ्चरिष्णु-तिर्यङ्मनुष्यकोलाहलश्रवणैः, श्रुतिभिः—वेदैर्वा । 'सदाचरणतः' शोभनाचारात् प्राप्ता प्रतिष्ठा उदयश्च येन सः । यद्वा सदा—सर्वकालं अचरणतः—अनाचारात् प्रगता आप्ते—देवगुर्वादौ प्रतिष्ठा—स्थैर्यं उदयः-उद्गतानुकूलं च दैवं यत्र सः । अयमभिप्रायः—सदाचरणं कुर्वंति यदा पुमांसस्तदा सुगतिर्भवति, असदाचारनिरतानां तु दुर्गतिरेव । 'सत्का-न्तारचितप्रियः' सत्कान्ताभिः रचिताः—कृताः प्रिया यत्र सः । 'वहुगुणः' प्रचुरगुणोऽनादिधर्मप्रतिवद्धः अन्यथाऽवहुगुणः ॥

॥ इति मर्त्यलोकवर्णनम् ॥ २६ ॥

## अथ सुरलोकवर्णनम्—

हे श्रीचौलुक्यनः! 'एश्वरेण' अकारेण अजरा निर्जरा देवा अभिधीयन्ते, ते ईश्वराः—समर्था यत्र स सुरलोकस्तेन सह साम्यमाल-म्बतेऽयं विहारः । कीदृशः सुरलोकः? गम्भीरः, काभिः? 'श्रुतिभिः'

अनवरतप्रवृत्तप्रेक्षणीयसङ्गीतश्रवणैः। सदा–सर्वदा अकारेण अजरा देवा अभधीयन्ते, तेषां 'चरणतः' सञ्चारात् 'प्राप्तप्रतिष्ठः' लब्धप्रतिष्ठः। 'दयः' दानि–देवाङ्गना याः–श्रिय इव यत्र सः। सतां–देवानां कान्ताभिः–देवीभिः रचितं सुखं येन सः। 'बहुगुणः' पातालमर्त्यलोकापेक्षया॥

॥ इति सुरलोकवर्णनम्॥ २७॥

## अथ धनुर्धरवर्णनम्—

हे श्रीचौलुक्यनः! अशब्देन प्रत्यञ्चा अभिधीयते, तस्यां विषये ईश्वरः एश्वरः–धानुष्कः तेन सह साम्यमालम्बतेऽयं विहारः। कीदृशो धानुष्कः? गम्भीरः 'श्रुतिभिः' धनुष्टङ्कारश्रवणैः। सह दा–खण्डनेन वर्तते यत् तच्च तदाचरणं च–धनुर्वेदाभ्यासलक्षणं तस्मात् प्राप्तप्रतिष्ठः–धानुष्केषु लब्धख्यातिः। दयः–दाता अदयः–निर्दयः। सतां–स्वजनानां कान्तानां–कलत्राणां रचितं प्रियं–अभीष्टं येन। 'बहुगुणः' बहुत्वं गुणे–प्रत्यञ्चायां यस्य। अयमभिप्रायः—न केवलं गम्भीरः श्रुतिभिः टङ्कारसम्बन्धिनीभिः सदाचरणान् खण्डन-सहिताचरणात् परेषां शिरश्छेद्याचरणात् प्राप्तप्रतिष्ठः सुभटः कुलकर-णतया प्रत्यञ्चालक्ष्मृदिति विभाव्यते। यदि वा 'कुण् गुण् केतण् आमन्त्रणे' इति गुण् धातोः बहून् सुभटान् गुणयति–आमन्त्रयतीति बहुगुणः॥ इति धनुर्धरवर्णनम्॥ २८॥

## अथ सज्जनवर्णनम्—

हे श्रीचौलुक्यनर! ईशब्देन शशधरकिरणा अभिधीयन्ते, तद्वत्

परोपकारशैत्याय य ईश्वरः—सज्जनस्तेन सह साम्यमालम्बतेऽयं विहारः। कीदृशः ? ' गम्भीरः ' गम्भीरप्रकृतिः ' श्रुतिभिः ' वेदोक्तिभिः यत् सदाचरणं—शोभनाचारः तस्मात् प्राप्तप्रतिष्ठोत्—वदनं यस्य लब्धमाहात्म्योक्तिरित्यर्थः । 'अयः ' एति—गच्छति सर्वहृदयाह्लादकत्वेन इति अयः । 'सत्कान्तारचितप्रियः' सत्सु—शिष्टेषु ये कान्ताः—कमनीयाः सज्जनशिरोमणयः तेषां आ—समन्तात् रचितं—प्रियं अभिमतं येन सः । ' बहुगुणः ' सकलसौहार्दादिगुणगणनिधानम् ॥

इति सज्जनवर्णनम् ॥ २९ ॥

## अथ दुर्जनवर्णनम् —

हे श्रीचौलुक्यनः ! ए—कामात्ममानरूप 'श्वरेण' श्ववत् राजते पृष्ठमांसभक्षणात् श्वरः—दुर्जनस्तेन सह साम्यमालम्बतेऽयं विहारः । कीदृशः दुर्जनः ? गमं—गमनं परवञ्चनायेति गम्यते तत् करोति तदाचष्टे वा ' णिज् बहुलं नाम्नः कृगादिषु ' ( सिद्ध० ३–४–४२ ) इति णिचि ' क्विप् ' ( सिद्ध० ५–१–१४८ ) इति च क्विपि ' णेरनिटि ' (सिद्ध० ४–३–८३) इति णिच्लोपे गम् । 'भीरः' भयप्रदः 'श्रुतिभिः' त्रासप्रदैः शब्दश्रवणैः । स दुर्जनः 'सदाचरणतः' खण्डनाचरणात् प्राप्तप्रतिष्ठः, । 'अदयः' निर्दयः । सतां—शिष्टानां कं—सुखं अन्तयति यत् तत् सत्कान्तम् । आरचितं प्रियं आत्माभीष्टं येन सः अत एव 'अबहुगुणः' निर्गुणः ॥

इति दुर्जनवर्णनम् ॥ ३० ॥

## अथ श्रीकुमारपालदेववर्णनम्—

श्रीचौलुक्यनरेश्वरेण कवेः पुरस्तादुपविष्टेन सह साम्यमालम्बतेऽयं विहारः । कीदृशः **कुमारपालदेवः** ? 'गम्भीरः' चर-

ममकराकरगाम्भीर्यभाक् । 'श्रुतिभिः' वेदोक्तिभिः 'सदाचरणतः' सदाचारात् 'प्राप्तप्रतिष्ठोत्' लब्धमाहात्म्यवक्ता । यद्वा प्रकृष्टा आप्त-विषये प्रतिष्ठां प्राप्ता उत्-उक्तिर्यस्य । अयः-अनुकूलदैवमिव वाञ्छि-तार्थदाता प्राणिनाम् । 'सत्कान्तारचितप्रियः :' सन्-नित्यं कं-सुखं अन्ते आरचितं-आरचना येषां ते सत्कान्तारचिताः-सेवकाः तेषां प्रियं यस्मात् सः । 'बहुगुणः' सकलगुणरत्नरत्नाकरः ॥

इति श्रीकुमारपालदेववर्णनम् ॥ ३१ ॥

अथ श्रीराजहंसवर्णनम्—

तथा विबुधश्रीहेमचन्द्रेण च सह साम्यमालम्बतेऽयं विहारः । विश्च बुधश्च-श्रीहेमचन्द्रश्च समाहारत्वादेकवचनम् । तत्र विना-पक्षिणा सह साम्यमालम्बतेऽयं विहारः । कीदृशः पक्षी ? 'गम्' गमनकर्ता विहायसि । तथा भिया राजते भीरः, काभिः स तादृशः ? 'श्रुतिभिः' तथाविधशब्दश्रवणैः । सदा-सर्वदा चरणतः-चङ्क्रमणात् चरणाभ्यां-पादाभ्यां वा चरणतः 'प्राप्तप्रतिष्ठः' प्राप्ताहारस्थितिः । 'अदयः' निर्दयः जीवाहारत्वात् । सच तत् कान्तारं च शून्यारण्यं तत्र चितं-प्रियं आहारावस्थानादिकं येन सः, प्रायः कान्तारप्रिय इत्यर्थः, जन-सङ्कुले तु भयविह्वलत्वात् स्थातुं न शक्नोति । तथा 'बहुगुणः' भूरिश्वेतगुणः राजहंस इत्यर्थः । अत्रार्थे च सति सत् शोभनं-निर्मलं यत् कं-मानसजलं तदन्ते-तत्पर्यन्ते आरचितं प्रियं येन सः । शुक-मयूरादिश्च भूरिनीलगुणः, एवं यस्य यो वर्णः स तस्य गुणः, यस्तु पक्षी हीनस्वरूपः सः अबहुगुण इति वर्णनीयः । अत्रैकस्मिन्नप्यर्थेऽ-नेकार्थता, यावत् पक्षिप्रतिपादने; तत्र कस्यापि कोऽपि गुणो भविष्य-तीति कृत्वा ॥

इति राजहंसवर्णनम् ॥ ३२ ॥

अथ श्रीपण्डितवर्णनम्—

तथा बुधेन सह साम्यमालम्बतेऽयं विहारः। तथाहि—विबुधः—पण्डितः गम्भीरः 'श्रुतिभिः' वेदैः सकलवाङ्मयश्रवणैर्वा। सदा—वरदा सरस्वती भगवती तस्याः चरणतः—पादप्रासादात् 'प्राप्तप्रतिष्ठोत्' प्राप्त-प्रतिष्ठाः(ष्ठं)उत्—वदनं यस्य सः। यद्वा सदाचरणतः—शोभनाचारात् प्रकर्षेण आप्ते—देवगुर्वादौ प्रतिष्ठा उत्—वदनं यस्य सः। अयः—अनुकूलदैववत् सर्वलोकसुखजनकः 'सत्कान्तारचितप्रियः' सतां—शिष्टानां कान्तानां—स्त्रीणां आरचितप्रियः—सर्वजनप्रिय इत्यर्थः। तथा अगणितबहुगुणः अगणितबहुरत्नरोहणगिरिः ॥

इति विबुधशब्देन पण्डितवर्णनम् ॥ ३३ ॥

अथ विबुधशब्देन मूर्खोऽप्यभिधीयते इति तत् प्रतिपाद्यते—

विपरीतलक्षणया आगच्छ भो विबुध! इति मूर्खं प्रति प्रतिपादिते मूर्खत्वमेव तस्यावसीयते, यथा दुर्भगं प्रति सुभग! इति भणि-तेऽपि दुर्भगत्वमभिधीयते, विगता बुधा यस्मात् स विबुधः—मूर्खः, तथा चोक्तम्—"मृगा मृगैः सङ्गमनुव्रजन्ति" यद्वा विरुद्धं बुध्यते इति विबुधः, 'नाम्युपान्त्यप्रीकृगृज्ञः कः' (सिद्ध० ५-१-५४) इति कः, तेन विबुधेन सह साम्यमालम्बतेऽयं विहारः। कीदृशो मूर्खः? 'गम्भीरः' गमाः—सदृशपाठाः तान् करोति आचष्टे वा णिच्, पूर्ववद् रूपसिद्धिः। गम्—आगमः तत्र विषये भिया राजते गम्भीरः

---

सम्पूर्णं पद्यं त्वेवम्—

"मृगा मृगैः सङ्गमनुव्रजन्ति गावश्च गोभिस्तुरगास्तुरङ्गैः।
मूर्खाश्च मूर्खैः सुधियः सुधीभिः समानशीलव्यसनेषु सख्यम् ॥"
(पञ्चतन्त्रे )

श्रुतिभिरुपलक्षितः, " सर्वं वाक्यं सावधारणम् " ततस्तत्त्वार्थावधारणे मूर्खत्वाद् अर्थमवधारयितुं न शक्तः सः। सदा-सर्वदा अचरणात् दुश्चारित्रात् 'प्राप्तप्रतिष्ठः' प्रगता आप्ते-देवगुर्वादौ प्रतिष्ठा-स्थैर्यं यस्य सः, देवे च गुरौ च सन्दिग्धबुद्धिरित्यर्थः। अदयः-निर्दयः जीवाजीवपरिज्ञानाभावात्। तथा चोक्तम्—

"[1] जो जीवे वि न याणाइ अजीवे वि न याणइ।
जीवाजीवे अयाणंतो कह सो नाहीइ संजमं ? ॥"
जो जीवे वि वियाणाइ अजीवे वि वियाणइ।
जीवाजीवे वियाणंतो सो हु नाहीइ संजमं ॥
( दशवै० अ. ४, गा. १२। १३ )

पढमं नाणं तओ दया एवं चिट्ठइ सव्वसंजए।
अन्नाणी किं काही किं वा नाही छेय पावगं ॥
( दशवै० अ. ४, गा. १० )

इति ज्ञानाभावाज्जीवदयाया अभावोऽवसीयते। 'सत्कान्तारचितप्रियः' सत्काः-सम्बन्धिनः स्वजनास्तान् अपि अन्तयति-विनाशयति

---

१ छाया—

यो जीवानपि न जानाति अजीवानपि न जानाति।
जीवाजीवानजानानः कथं स ज्ञास्यति संयमम् ? ॥
यो जीवानपि विजानाति अजीवानपि विजानाति।
जीवाजीवान् विजानानः स खलु ज्ञास्यति संयमम् ॥
प्रथमं ज्ञानं ततो दया एवं तिष्ठति सर्वसंयतः।
अज्ञानी किं करिष्यति ? किं वा ज्ञास्यति छेकं पापकम् ? ॥

यः स सत्कान्तः स चासौ अरचितप्रियश्च न रचितं—प्रियं सुखं—येन सः सर्वसंहारकर्ता इत्यर्थः, यतः सर्वेऽपि जीवाः संसारे सर्वैः सह सम्बन्धमनेकशोऽनुभूतपूर्वाः । तथा चोक्तमागमे—'[1]**एगेगस्स णं जीवस्स सव्वे जीवा माइत्ताए धीयत्ताए पियत्ताए पुत्तत्ताए अणंतसो अ उप्पण्णपुव्व** ' त्ति । अत एवायं 'न बहुगुणः' निर्गुण इत्यर्थः ॥

॥ इति मूर्खवर्णनम् ॥ ३४ ॥

## अथ लक्ष्मीवर्णनम्—

तथा श्रिया सह साम्यमालम्बतेऽयं विहारः ।

कीदृशी श्रीः? अर्थवशाद् विभक्तिपरिणाम इति गम्भीरः, काभिः? '**श्रुतिभिः**' विष्णुनाभिकमलब्रह्मवेदोद्गारैः 'सदाचरणतः' शोभनाचरणात् प्राप्तप्रतिष्ठः—उदयो यस्याः सा प्राप्तप्रतिष्ठोदया । सत्—शोभनत्वात् शोभनो यः कान्तः—केशवः तस्य आरचितं प्रियं—सुरतदानादिकं यया सा । अत एव हि बहुगुणः, लक्ष्म्या हि अलङ्कृताः पुरुषा निर्गुणा अपि सगुणा इव भासन्ते ॥

॥ इति लक्ष्मीवर्णनम् ॥ ३५ ॥

## अथ स्वर्णवर्णनम्—

तथा हेम्ना—सुवर्णेन सह साम्यमालम्बतेऽयं विहारः । कीदृशं हेम ? 'गम्भीरम्' अलब्धमध्यम्, वर्णिकावृद्धौ तस्य मूल्यवृद्धेर्गम्भीरत्वम् । 'श्रुतिभिः' तथामूल्यश्रवणैः । सदाचरणं—दक्षिणावर्त्तभ्र-

---

१ एकैकस्य खलु जीवस्य सर्वे जीवा मातृत्वेन दुहितृत्वेन पितृत्वेन पुत्रत्वेन च अनन्तश उत्पन्नपूर्वाः ।

मिलक्षणं तस्मात् 'प्राप्तप्रतिष्ठोदयं' लब्धमाहात्म्योन्नति। सतां–नृपतीनां कान्ता–अन्तःपुरपुरन्ध्रयः तासां आरचितं प्रियं येन तत्। 'बहुगुणं' गुणाष्टकोपेतम्। तथाहि—

'विसघाय रसायण मंगलत्थ विणीए पयाहिणावत्ते।
गुरुए अडज्झऽकुच्छे अट्ठ सुवण्णे गुणा हुंति॥

इति हेमगुणवर्णनम्॥ ३६॥

अथ चन्द्रवर्णनम्—

तथा चन्द्रेण–शशधरेण सह साम्यमालम्बतेऽयं विहारः। कीदृशः चन्द्रः? 'गम्' गमनकर्ता नभसि। भानि–नक्षत्राणि विद्यन्ते यस्य स भी। ई–लक्ष्मीस्तया राजत इति ईरः। 'श्रुतिभिः' स्वविमानस्थित-सुरप्रारब्धगान्धर्वनृत्यश्रवणैः। सह दा–खण्डनेन वर्त्तते यत् तत् सदम् तच्च तदाचरणं च तस्मात् प्राप्ता प्रतिष्ठा उदये–उदयपर्वते येन सः। सत्काः–स्वसम्बन्धिन्यो यास्तारकाः तासु आमं–गमनं करोति णिच् क्विप् तल्लोपे सत्काम् इति रूपसिद्धिः। 'तारचितप्रियः' तारश्चासौ चितप्रियश्च तारचितप्रियः–तारोपचितकलत्रः। बहवो जगदाह्लादनप्रभृतयो गुणा यस्य सः॥

इति चन्द्रवर्णनम्॥ ३७॥

---

१ छाया—
विषघाति रसायनं मंगलार्थं विनीतं प्रदक्षिणावर्तम्।
गुरुकं अदह्यं अकुत्स्यं अष्ट सुवर्णे गुणा भवन्ति॥

२ "कसाइ चउ सुद्धकणयगुणा" इति धर्मपरीक्षायां पाठः

## अथ कर्पूरवर्णनम्—

तथा चन्द्रशब्देन कर्पूरोऽभिधीयते तेन सह साम्यमालम्बतेऽयं विहारः। कर्पूरः कीदृशः? 'गम्' गमनकर्ता सर्वत्र सञ्चरिष्णुगन्ध इत्यर्थः। 'भीरः' भी–चन्द्रः तद्वद् याऽसौ ई–शैत्यश्रीः तया राजते। 'श्रुतिभिः' अहो कर्पूरपरिमलोऽयं इति सकललोकश्रवणैरुपलक्षितः।सत्–शैत्याधायि यदाचरणं तस्मात् प्रकर्षेण आप्तः–शरीरी यत्र तत् प्राप्तं–शरीरं तत्र प्रतिष्ठते यदुत्तमाङ्गं तत् प्राप्तप्रतिष्ठं तत्र उदयः–अवस्थानं यस्य। सतां–सुभगानां कान्तानां–स्त्रीणां रचितं प्रियं येन सः, सौरभ्यजननान्निर्मितप्रीतिरित्यर्थः। बहवो वैशद्यसौरभ्यप्रभृतयो गुणा यस्य सः। तथा चन्द्रशब्देनाऽऽह्लादोऽभिधीयते, स च स्रक्चन्दनाङ्गनादिपदार्थजन्मानेकप्रकार इत्यनेकार्थता ॥

इति कर्पूरवर्णनम् ॥ ३८ ॥

## अथ देववर्णनम्—

तथा विबुधः–देवः तेन सह साम्यमालम्बतेऽयं विहारः। विबुधः कीदृशः? गम्भीरः, काभिः? 'श्रुतिभिः' जय जय नन्द नन्द इत्यादिचाटुवचनश्रवणैः। सदाचरणानि–शोभनाचाराः क्रीडावापीमज्जनजिनपूजनपुस्तकवाचनादीनि तेभ्यः सदाचरणतः 'प्राप्तप्रतिष्ठोदयः' लब्धोन्नतिः। यद्वा सह दा–खण्डनेन वर्त्तते यः स सदा–दैत्यः तेन सह च रणतः–सङ्ग्रामात् प्राप्तोन्नतिः। सत्कान्ताः–देवाङ्गनास्ताभिः रचितं प्रियसङ्गमाश्लेषसुखं यस्य सः। 'बहुगुणः' भूरिगुणः ॥

इति देववर्णनम् ॥ ३९ ॥

अथ सूर्यवर्णनम्—

तथा विबुधशब्देनाऽऽदित्योऽभिधीयते, आदित्यशब्देन च सूर्य इति। अथवा वयः—पक्षिणः बुधा इव, यस्माद् वाचालतया सूर्योदये हि पक्षिणः कोलाहलं कुर्वन्ति। विबुधः—सूर्यः। तथा सूर्येण सह साम्यमालम्बतेऽयं विहारः। सूर्यः कीदृशः? 'गम्' गमनकर्ता विहायसि चतुर्दिशं मेरोः। 'भीरः' भियं ईरयति—कम्पयति भीरः। 'श्रुतिभिः' प्रातःप्रबुद्धविप्रवेदोद्गारैरुपलक्षितः। सदा—सर्वदा चरणतः—सञ्चारात् प्राप्ता प्रतिष्ठा—स्थितिः उदये—उदयगिरौ येन सः। सतां—शिष्टानां कान्तानां—स्त्रीणां च रचितं—निर्मितं प्रियं—प्रकाशलक्षणं येन सः। बहवः प्रकाशप्रतापादयो गुणा यस्य स बहुगुणः॥

इति सूर्यवर्णनम्॥ ४०॥

अथ श्रीहेमचन्द्राचार्यवर्णनम्—

तथा विबुधश्रीहेमचन्द्रेण—श्रीहेमचन्द्राचार्येण सह साम्यमालम्बतेऽयं विहारः। कीदृशः श्रीहेमचन्द्राचार्यः? 'गम्भीरः' क्षीरसागर इव गाम्भीर्यभाक् 'श्रुतिभिः' सकलवेदसकलशास्त्रश्रवणैः। सत्—शोभनं यदाचरणं—आचारः *पञ्चप्रकारः तस्मात् 'प्राप्तप्रतिष्ठः' सकलजगति लब्धसाधुवादः। 'दयः' सकलसत्त्वविषये दाता। यद्वा प्राप्तप्रतिष्ठ उदयः—समृद्धिर्यस्य। यद्वा प्रकृष्टः आप्तप्रतिष्ठया—श्रीपार्श्वनाथप्रतिमाप्रतिष्ठया उदयः—महोदयो यस्य सः। यद्वा प्रकृष्टा आप्तप्रतिष्ठायै—सर्वज्ञसिद्धिनिमित्तं उत्—उक्तिर्यस्य सः। अयः—अनुकूलं दैवं सकलभव्यलोकानाम्। यद्वा आप्तविषये—देवगुरुविषये प्रतिष्ठन्ते ये। के?

---

* उक्तं च—

नाणंमि दंसणम्मि य चरणंमि तवम्मि तहय विरयंमि।
आयरणं आयारो इअ एसो पंचहा भणिओ॥ १॥

मुनयः श्रावका वा । प्रकृष्टः आप्तप्रतिष्ठानां उदयः—अभ्युदयः ऊर्ध्वगमनं वा यस्मात् सः । यद्वा प्राप्तप्रतिष्ठस्य—सुरेषु प्राप्तप्रतिष्ठस्य उरिव—ब्रह्मण इव दया—करुणा यस्य सः । यद्वा प्रकृष्ट आप्तः—आत्मा परमात्मा वा यस्य सः श्रीकुमारपालदेवः तस्मात् प्रतिष्ठा—माहात्म्यं उदयश्च—अभ्युदयो यस्य सः । यद्वा प्राप्तानां प्रणामाय श्रावकाणां साधूनां वा प्रतिष्ठा उदयश्च यस्मात् सः । यद्वा प्रकर्षेण आ—श्रीः तां प्राप्ता ये ते श्रीमन्तः कोटीश्वराः तेषां प्रतिष्ठा उदयश्च यस्मात् सः । यद्वा प्रकर्षेण अः—विष्णुः आप्तः—देवस्वरूपेण विदितो यैस्ते वैष्णवास्तेषां प्रणामसमये विष्णुतयाऽध्यवसितपूज्यमूर्त्तीनां प्रतिष्ठा उदयश्च यस्मात् सः । यद्वा 'प्राप्तप्रतिष्ठः' भगलिङ्गाकारेण लब्धख्यातिः महाकाल—सोमनाथप्रभृतितीर्थप्रतिष्ठितो वा महेश्वरः तस्यैव उदयो यस्य, अणिमाद्यष्टमहासिद्धिभाजनत्वेन जना भगवन्तं श्रीहेमचन्द्रसूरिं महेश्वरं मन्यन्त इति भावार्थः । यद्वा 'प्रा पूरणे' भावक्विन्तः तदर्थं आप्ताः—प्राप्ता ये भौतिकतापसास्तेषां प्रतिष्ठा उदयश्च यस्मात् । यद्वा 'प्रा पूरणे' स्वमांसदानेनापि पूर्तिः भोजनार्थिनां आप्तानां—आगतानां पारापतादीनां यस्मात् सः सुगतः करुणतया तस्यैव प्रतिष्ठा उदयश्च यस्य सः । यद्वा प्रकर्षेण आ—लक्ष्मीः आप्तः—धनपतित्वेन स धनदस्तस्यैव दानवेलायां प्रतिष्ठा—प्रागल्भ्यं उदयः—अत्रुटितकोशाभ्युदयो यस्य सः । यद्वा प्रकर्षेण आ—लक्ष्मीः आप्ता पुत्रीत्वेन येन सः प्राप्ता—समुद्रः तस्यैव प्रतिष्ठा—स्वमर्यादानुल्लङ्घनं उदयः—गाम्भीर्यं यस्य सः । यद्वा

---

१ अणिमा महिमा चैव गरिमा लघिमा तथा ।
प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्ट सिद्धयः ॥

प्रकृष्टा आ—श्रीः आप्ता भगिनीत्वेन गृहीता येन स चन्द्रः तस्यैव सितपक्षे प्रतिष्ठा—प्रौढत्वं उदयः—उद्गमश्च यस्य सः । यद्वा प्रकृष्टा आ श्रीः—शोभा येषां ते प्राः—देवास्ते आप्ताः—हिताः सेवका यस्य स इन्द्रः तस्यैव प्रतिष्ठा—माहात्म्यस्थैर्यं उदयः—परमैश्वर्यं यस्य सः । यद्वा प्रकृष्टा आ—श्रीः किरणसहस्रशोभा यस्य स प्राः—आदित्यस्तस्यैव प्रतिष्ठा—परमततिमिरहरणेन माहात्म्यं उदयः—प्रतापोदयो यस्य सः । यद्वा प्रकृष्टा आ—श्रीः आप्ता यैस्ते देवाः तेषां मध्ये प्रतिष्ठा—बुद्धिव्यवस्थास्थैर्यं यस्य स बृहस्पतिस्तस्यैव उत्—उद्गतः अयः—परिज्ञानं यस्य सः । एवमस्मिन्नेव पदे मेरु—पारिजात—चिन्तामणि—कामधेनु—श्री—सरस्वती—लक्ष्मीप्रभृतिसकलपदार्थावतारणादनन्तार्थता । तथा सतां—शिष्टानां कान्तं—कमनीयं आरचितं प्रियं—हृदयाभिप्रेतं येन सः । 'बहुगुणः' षट्त्रिंशदाचार्यगुणोपेतः युगप्रधान इत्यर्थः ॥

इति श्रीहेमचन्द्रसूरिवर्णनम् ॥ ४१ ॥

**अथ मङ्गलवर्णनम्—**

तथा वाग्भटमन्त्रिणा सह साम्यमालम्बतेऽयं विहारः । श्रीर्विद्यते यस्य स श्रीमान्—ईश्वरः, यद्वा श्रियं मथ्नाति यः स श्रीमथ्, स

---

१ षट्त्रिंशदाचार्यगुणास्त्वेवम्—
पंचिंदियसंवरणो तह नवविहबंभचेरगुत्तिधरो ।
चउविहकसायमुक्को इअ अट्ठारस गुणेहिं संजुत्तो ॥ १ ॥
पंचमहव्वयजुत्तो पंचविहायारपालणसमत्थो ।
पंचसमिओ तिगुत्तो छत्तीसगुणो गुरू मज्झ ॥ २ ॥
एतदतिरिक्ता अपि विविधप्रकारेण ३६ गुणा भवन्ति ।
एतदर्थं विलोक्यतां गुरुगुणषट्त्रिंशिका ॥

च वाक् च भटश्च मन्त्री च समाहारत्वादेकवचनम् । श्रीमान्—धनपतिः सोऽर्थः पूर्वं वर्णित एव । श्रियं मथ्नाति यः स वक्र एव, वक्रश्च मङ्गलः तेन सह साम्यमालम्बतेऽयं विहारः । कीदृशो मङ्गलः ? ' गम् ' गमनकर्ता व्योम्नि 'भीरः' भयप्रदः 'श्रुतिभिः' लोकप्रवादैर्न पुनस्तत्त्ववृत्त्या, "यतो धर्मवतां पुंसां सर्वे सानुग्रहा ग्रहाः।" इति वचनात् ।सदा—सर्वदा चरणतः—सञ्चारात् प्राप्तप्रतिष्ठः उदयः—उद्गमो यस्य सः । सन्त एव गहनस्वान्ततया कान्तारं तत्र चितं—उपचितं प्रियं यस्मात् सः । वहुगुणः शुभग्रहनिरीक्षितो यदि, अवहुगुणः वक्रितो यदि ॥

इति मङ्गलवर्णनम् ॥ ४२ ॥

## अथ वुधवर्णनम्—

तथा ' विवुधश्रीहेमचन्द्रेण ' इति पदे वुध इत्यस्ति विशेष्यम्, ततः वुधेन—सौम्येन सह साम्यमालम्वतेऽयं विहारः । कीदृशो वुधः ? 'गम् ' गमनकर्ता व्योम्नि । ' भीरः ' भानि—नक्षत्राणि विद्यन्ते यस्य स भी—चन्द्रः तस्य ई—लक्ष्मीस्तया राजते—शोभते यः स भीरः तत्पुत्रत्वादेतस्य । भियं वा ईरयति—कम्पयति भीरः, ' श्रुतिभिः ' वेदोक्तमन्त्रश्रवणैः । सदाअचरणः' पङ्गुः—शनैश्चरः तस्मात् 'प्राप्तप्रतिष्ठोदयः' केन्द्रस्थानादस्मात् प्रतिष्ठावाप्तेः । सतां—शिष्टानां कान्तानां—स्त्रीणां आरचितं प्रियं येन सः । यद्वा सत्सु कान्तः स चासौ आरचितप्रियश्च । आरेण—मङ्गलेन प्राग्भागवर्त्तिना चितप्रियः—उपचिताभिमतवस्तुः । वहुगुणः, सर्वग्रहेषु सौम्यत्वादस्य ॥

इति वुधवर्णनम् ॥ ४३ ॥

अथ बृहस्पतिवर्णनम्—

तथा 'श्रीमद्वाग्भटमन्त्रिणा' श्रीमन्तः—देवाः तेषां वाग्भटः—वाग्मी योऽसौ मन्त्री बृहस्पतिः तेन सह साम्यमालम्बतेऽयं विहारः। कथंभूतो बृहस्पतिः? 'गम्भीरः' गम्भीरस्वरूपः, 'श्रुतिभिः' वेदोद्वारैः सकलशास्त्रश्रवणैर्वा। 'अचरणतः' पङ्गोः—शनैश्चरात् 'प्राप्तप्रतिष्ठः' परस्परं ग्रहाणां मैत्रीसद्भावात्। 'दयः' लाभदाता। सतां कान्तं—कमनीयं आरचितं प्रियं येन सः। 'बहुगुणः' प्रचुरपाटवादिगुणोपेतः॥ इति बृहस्पतिवर्णनम्॥ ४४॥

अथ शुक्रवर्णनम्—

तथा श्रियं मथ्नन्ति ये ते श्रीमथः—दानवाः तेषां वाग्भटः—वाग्मी योऽसौ मन्त्री असुरगुरुः तेन सह साम्यमालम्बतेऽयं विहारः। कीदृशः शुक्रः? 'गम्भीरः' गम्भीरार्थशास्त्रकरणात् 'श्रुतिभिः' उपलक्षितः सकलशास्त्रश्रवणात्। 'सदा च' सर्वकालं च 'रणतः' देवैः सह सङ्ग्रामकरणात् प्राप्तप्रतिष्ठः उदयः अभ्युदयः पाताले यस्य सः। सत्काः—शोभनपानीयाः अन्ताः—पर्यन्ता यस्य पातालस्य तत्र आरचितप्रियः—असुराणां निर्मिताभिमतवस्तुः। 'बहुगुणः' प्रचुरप्रज्ञागुणः॥

इति शुक्रवर्णनम्॥ ४५॥

अथ शनश्चरवर्णनम्—

तथा श्रीर्मथ्नाति यः स श्रीमत् तेन श्रीमथा 'असाधारणविशेषणात् विशेष्यावगति'रिति न्यायात् शनैश्चरण सह साम्यमालम्बतेऽयं विहारः।

कीदृशः शनिः ? ‘ गम् ’ गमनकर्ता गगनाङ्गणे । ‘ भीरः ’ भयप्रदः ‘ श्रुतिभिः ’ नामश्रवणैः । सदा ’ सर्वदा ‘ अचरणतः ’ न विद्यते चरणता—पादविहारश्रीर्यस्य शनैश्चरत्वात् । प्राप्ता प्रतिष्ठा उदयश्च येन सः, सतां—शिष्टानां कान्तानां—कलत्राणां न रचितं—न निर्मितं प्रियं येन सः, मिथुनानां वियोगजनक इत्यर्थः । वहुगुणो यदि नीचस्थानस्थितः, अवहुगुणो यद्युच्चस्थानस्थितः ॥

इति शनैश्चरवर्णनम् ॥ ४६ ॥

अथ राहुवर्णनम्—

तथा ‘ विवुधश्रीहेमचन्द्रेण ’ इति पदे वुधश्रीह इति पदं विशेष्यम् । वुधस्य पुत्रस्य श्रीर्यस्मात् स वुधश्रीः—चन्द्रः तं हन्ति—भक्षणाय गच्छति विनाशयति वा यः स वुधश्रीहः—राहुः तेन सह साम्यमालम्बतेऽयं विहारः । राहुः कीदृशः ? ‘ गम् ’ गमनकर्ता । चन्द्रेण सह अधोभागवर्ती । ‘ भीरः ’ ग्रहणवेलायां भयप्रदः । ‘श्रुतिभिः’ ‘ मुञ्च राहो ! चन्द्रम् ’ इति पुनरुक्तं सकलजनवचनश्रवणैः । यद्वा भानि—नक्षत्राणि विद्यन्ते यस्य स भी—चन्द्रः तं—ईरयति—कम्पयति यः स भीरः । काभिः स ईदृशः ? ‘ श्रुतिभिः ’ वेदवाक्यैः । ‘ सदं ’ सखण्डनं यदाचरणं—चङ्क्रमणं भक्षणं वा तेन ‘ प्राप्तप्रतिष्ठः ’। ‘अदयः’[निर्दयः] ग्रसनवेलायां अदाता फलवेलायाम् । सत्—अमृतपानेन नित्यं कं—मस्तकं तदन्तेन—तत्पर्यन्तेन आ—समन्ताद् रचितं—निर्मितं प्रियं शशिरविग्रासादिकं येन सः। अत एव ‘वहुगुणः’ प्रवलपौरुषगुणः ॥

इति राहुवर्णनम् ॥ ४७ ॥

## अथ केतुवर्णनम्—

तथा ' श्रीचौलुक्यनरेश्वरेण ' इति पदे ' र ' इति विशेष्यमस्ति, ततश्च रशब्देन शिखो—वन्हिरभिधीयते, तत्पर्यायः शिखी—केतुः तेन सह साम्यमालम्ब्यतेऽयं विहारः। यथा 'पङ्क्तिरथो दशरथ' इति तथेदं विशेष्यमवगन्तव्यम् । केतुः कीदृशः ? ' गम ' गमनकर्ता नभसि । ' भीरः ' राहूस्यापि भयप्रदः ' श्रुतिभिः ' श्रुतिमात्रैर्न पुनस्तत्त्ववृत्त्या । ' सदा ' सर्वदा च ' रणतः प्राप्तप्रतिष्ठः ' रणः—सङ्ग्रामस्तत्र तस्—' तसु दसु उपक्षये ' भावक्विवन्तः ततस्तया रणतसा प्राप्तप्रतिष्ठः । ' अदयः ' निर्दयः । सतां कान्तारे चितं प्रियं यस्मात् सः, बहुगुणो यदि नीचस्थानस्थितः, अबहुगुणो यद्युच्चस्थानस्थः ॥

॥ इति केतुवर्णनम् ॥ ४८ ॥

## अथ महेश्वरशिरश्चन्द्रवर्णनम्—

तथा मचन्द्रेण सह साम्यमालम्ब्यतेऽयं विहारः। मशब्देन महेश्वरोऽभिधीयते, तस्य चन्द्रः—मौलिचन्द्रमाः तेन । कीदृशः महेश्वरशिरश्चन्द्रः ? गम्भीरः काभिः ? ' श्रुतिभिः ' गङ्गाजलप्रवाहपातशब्दश्रवणैः। सह दा—दानेन स सदा—महेश्वरः, तस्य सत्कान्तायाः—गौर्याश्च रचितं प्रियं—निधुवनावसरे दीपायितं येन सः । बहवः—प्रचुराः कान्तिसौन्दर्यादयो गुणा यस्य सः ॥

इति महेश्वरशिरश्चन्द्रवर्णनम् ॥ ४९ ॥

अथ महेश्वरहासवर्णनम्—

तथा मस्य—महेश्वरस्य चन्द्रः—आह्लादः हासलक्षणस्तेन सह साम्यमालम्बतेऽयं विहारः। महेश्वरहासः कीदृशः? 'गम्' सकलत्रैलोक्येऽपि गमनकर्ता। तथा 'भीरः' भानि—नक्षत्राणि विद्यन्ते यस्य स भी—चन्द्रः तस्य ईरः—कम्पो यस्मात्, धवलिम्ना तमपि निराचकार इत्यर्थः। यद्वा भी—चन्द्रः तस्य ईः—कान्तिस्तद्वद् राजते—शोभते यः सः। 'श्रुतिभिः' अट्टहासश्रवणैः। 'सदा च' सर्वकालं च 'रणतः' प्रतिशब्दाच्च 'प्राप्तप्रतिष्ठोदयः' लब्धमाहात्म्योन्नतिः। सत्यौ—साध्व्यौ ये कान्ते—गङ्गागौर्यौ तयोः 'रचितप्रियः' विरचितानन्दः। वहुः—प्रचुरः धवलतालक्षणो गुणो यस्य सः॥

इति महेश्वरहासवर्णनम्॥ ५०॥

अथ महेश्वरभस्मोद्धूलनवर्णनम्—

तथा मस्य—महेश्वरस्य चन्द्र इव प्रोज्ज्वलः, यद्वा चन्द्रः—कर्पूरः स इव शीतलो योऽसौ भस्मोद्धूलनप्रकारः तेन सह साम्यमालम्बतेऽयं विहारः। कीदृशो महेश्वरस्य भस्मोद्धूलनप्रकारः? गम्भीरः, न ज्ञायतेऽसौ भस्मना निर्मितः, कर्पूरपारीक्लृप्तो वा, रूप्यद्रुतिनिर्मितो वा, स्फटिकशकलघटितो वा, तुहिनपिण्डविरचितो वा, सकलद्रव्य-[निस्यन्दनिष्पादितो वा इति संशयजननात्।] 'श्रुतिभिः' तटोपविष्टपद्मनाभनाभिकमलकमलोद्भवप्रतिपाद्यमानस्तुतिमन्त्रसंवलितवेदोद्गारैः। 'चरणतः' ब्रह्मणैव प्रतिपादितेभ्यः अध्ययनविशेषेभ्यः 'प्राप्तप्रतिष्ठः' लब्धावस्थानः शरीरे। 'दयः' प्रणतानां वाञ्छितार्थदाता। सत्कान्ता-

याः—गौरीगङ्गायाः रचितप्रियः,आश्लेषसमये कर्पूरचूर्णसौभाग्यजननात्, अत एव 'वहुगुणः' प्रकृष्टधवलिमा ॥

इति महेश्वरमस्मोद्धूलनप्रकारः ॥ ५१ ॥

अथ दानववर्णनम्—

तथा विबुधानां या श्रीः—लक्ष्मीः तां हन्तीति यः सः [ विबुध-हः— ] दानवः तेन सह साम्यमालम्बतेऽयं विहारः। कीदृशो दानवः ? गम्भीरः, । दुर्लक्ष्यमध्यत्वात् । 'श्रुतिभिः' पातालगङ्गाक्षरण-ध्वानश्रवणैः । 'सदा' सर्वदा अचरणाः—सर्पा नागकुमाराः इत्यर्थः तेभ्यः प्राप्तप्रतिष्ठः । 'अदयः' निष्कृपः । सत्कान्तानां—असुराङ्ग-नानां रचितप्रियः । 'बहुगुणः' प्रतिपक्षप्रदत्ते प्रहारे विविधरूपधारी, मायावित्वात् ॥ दानववर्णनम् ॥ ५२ ॥

अथ नरवर्णनम्—

हे चौलुक्य ! नरेण सह साम्यमालम्बतेऽयं विहारः । कीदृशो नरः ? 'गम्भीरः' गाम्भीर्यभाक् 'श्रुतिभिः' सकलशास्त्रश्रवणैः सकर्ण इत्यर्थः । 'सदा' सर्वदा 'चरणतः' चरणाभ्यां सञ्चरणाद् वा प्राप्तप्रतिष्ठः पृथिव्याम् । 'दयः' दाता । सती याऽसौ कान्ता तया 'रचितप्रियः' निर्मिताभिप्रेतरतिः । 'बहवः' प्रचुरा गाम्भीर्यौ-दार्यादयो गुणा यस्य ॥

॥ इति नरवर्णनम् ॥ ५३ ॥

अथ लक्ष्मीहन्तृवर्णनम्—

श्रियं हन्ति यः स श्रीहः तेन सह साम्यमालम्बतेऽयं विहारः

कीदृशः ? गम्भीरः, काभिः ? 'श्रुतिभिः' गीतादिश्रवणैः । 'सदा' सह दा—दानेन वर्तते यत् तत् सदम् तच्च तदाचरणं च तस्माद् दानसहिताद् आचरणात्—परस्त्रीसम्भोगत इत्यर्थः । 'अदयः' निर्दयः कृपणो वाऽस्य बान्धववित्तसम्भागे प्रगता आप्तविषये प्रतिष्ठा यस्य सः, आप्तान् देवगुरून् न मन्यत इत्यर्थः । सतां—शीलवतां याः कान्ताः—कमनीयशरीराः स्त्रियः ताभिः रचितं प्रियं—आश्लेषादिकं येन सः, परयुवतिषु निधुवनप्रियतया हारितसकलद्रविण इत्यर्थः । अत एवाऽबहुगुणः—निर्गुणः ॥

इति लक्ष्मीहन्तृवर्णनम् ॥ ५४ ॥

## अथ हेममयचन्द्रवर्णनम्—

तथा हेमचन्द्रः—सुवर्णचन्द्रः तेन सह साम्यमालम्बतेऽयं विहारः। कीदृशः हेमचन्द्रः ? 'गम्भीरः' गम्भीरध्वानः । काभिः ? 'श्रुतिभिः' घटनसमुत्थटङ्कारशब्दश्रवणैः, काञ्चनस्य सूक्ष्मघटनवेलायां मधुरः स्वरो भवति, गाढघाटग्रहणे गम्भीरः स्वरो भवति इति। चन्द्रस्तु श्रुतिभिः—गम्भीर इति हेम्नश्चन्द्रस्य च साम्यम् । हेमचन्द्रः सदा 'चरणतः' पादादारभ्य स्त्रीणां पुरुषाणां च प्राप्तप्रतिष्ठः उदयो यस्य सः, चन्द्रस्तु 'चरणतः' सञ्चारात् प्राप्ता प्रतिष्ठाः उदयेउदयपर्वते येन सः, हेमचन्द्रः सत्कान्ते—सतां मस्तकपर्यन्ते आरचितेन—आरचनया प्रियः—अभिमतः, चन्द्रस्तु सत्कान्ताः—ताराः तासां रचितप्रियः—निर्मितानन्दः । हेमचन्द्रस्तु तावद् बहुगुणः—कान्त्यादिगुणोपेतः, अस्ति चात्रार्थे वृत्तम्—

"सौवर्णं वलयं जगाम विलयं पत्युर्वियोगानले—

स्तन्व्याः केलिमृगस्पृशो वियुत इत्येषोऽपि ही दुःखितः ।

वाष्पैः सिक्तमनाम्भू मिहरिणा सक्तं च भर्तुः स्मृते-
रुच्छ्वासैर्गमनं यया त्वयमपि श्रीहेमचन्द्रः स्मृतः ॥ ''

इति श्रीहेममयचन्द्रवर्णनम् ॥ ५५ ॥

अथ याचकवर्णनम्—

तथा श्रियं ईहते—याचते श्रीहः—'कर्मणोऽण्' ( सिद्ध० ५। १। ७२) इत्यणि याचक इत्यर्थः, तेन सह साम्यमालम्बतेऽयं विहारः । कीदृशा याचकः ? 'गम्भीरः' अकोपनप्रकृतः । काभिः ? 'श्रुतिभिः' दातुः सम्बन्धिनीभिः कर्णकटुकवाक्यश्रवणैः । 'सदा चरणतः' सततं गृहे गृहे क्रमगात् प्राप्ता प्रतिष्ठा स्थितिः—अवस्थानं ग्रासार्द्धग्रास-प्राप्तिर्येन सः । 'सत्कान्तारचितप्रियः' सति—पुष्पफलादिभिः [समृद्धे] कान्तारे—अरण्ये चिता—उपचिता प्रिया—कान्ता यस्य सः।'अबहुगुणः' सकलगुणरहितः । तथा च प्रोक्तम्—

'' तृणं लघु तृणात् तूलं तूलादपि हि याचकः ।
वायुना किं न नीतोऽसौ ? मामपि प्रार्थयिष्यति ॥ ''

इति याचकवर्णनम् ॥५६॥

अथ निष्कामवर्णनम्—

तथा श्रीहेन—श्रीमता ' इहेन ' इः—कामः तं हन्तीति इहः—कामापहारी निःकामः तेन सह साम्यमालम्बतेऽयं विहारः । कीदृशो निःकामः ? ' गम्भीरः ' गम्भीरस्वभावः, काभिः ? ' श्रुतिभिः ' सिद्धान्तश्रवणैः। 'सदा' सर्वदा चरणतः—चारित्रात् 'प्राप्तप्रतिष्ठः'लब्ध-माहात्म्यः । उत्—ऊर्ध्वं स्वर्गापवर्गादौ अयः—गमनं यस्य सः। सतां—

साधूनां मुनीनां कान्तेव कान्ता—दीक्षाङ्गना तस्या रचितं प्रियं येन सः। ' बहुगुणः ' सकलगुणगणोपेतः ॥

इति निष्कामवर्णनम् ॥ ५७ ॥

## अथ धर्म [पुरुषार्थ] वर्णनम्—

तथा श्रीः—लक्ष्मीः तस्या मतः—अभिप्रेतः तं करोति ' णिज् बहुलं नाम्नः कृगादिषु ' ( सिद्ध० ३।४। ४२) इति णिचि 'क्विप्' (सिद्ध० ५।१।१४८) इति क्विप् तयोर्लोपे श्रीमत्—धर्मः, तेन सह साम्यमालम्बतेऽयं विहारः। कीदृशो धर्मः? 'गम्भीरः' गम्भीरार्थः, पापमपि कुर्वन्तः सौनिका 'वयं धर्मं कुर्महे' इति प्रतिपादनश्रवणात्। धर्मोऽपि शब्दसाम्येन क्रियमाणोऽपि स्वर्गनरकफलो दृश्यते, दुग्धमिव गोदुग्धार्कक्षीरयोः, एकं हि पुष्टिं जनयति पीयमानम्, अपरमन्त्रसाटम्। ततोऽसौ धर्मः गम्भीरः, 'श्रुतिभिः' वेदैः, तेषु 'न हिंस्यात् सर्वभूतानि' ( छां. उ. अ. ८) इति प्रतिपाद्य 'अजैर्यष्टव्यम्' इति प्रतिपादितम्। तच्च व्याख्यातुमजानन्तः अजैः—पशुभिरिति व्याचक्षते मन्दबुद्धयः। ये तु पारम्पर्येणाऽस्य वेदवाक्यस्य व्याख्यां जानते ते जैनाः त्रिवार्षिकैर्व्रीहिभिर्यष्टव्यमिति ब्रुवते, न जायन्त इत्यजाः—त्रिवार्षिका व्रीहय इति सिद्धान्ते श्रवणात्। किञ्च यदि जीववधेन स्वर्गः प्राप्यते तर्हि नरकगमनहेतुरपि नास्तीति गम्भीरो धर्मः। 'सदा' सर्वदा 'चरणतः' चारित्रात् प्राप्तप्रतिष्ठः—लब्धमाहात्म्य उदयः—महाभ्युदयो निर्वाणावाप्तिर्यत्र सः। 'सत्कान्तारचितप्रियः' सतां कान्तं—कमनीयं आरचितं—निर्मितं प्रियं येन सः। 'बहुगुणः' ज्ञानदर्शनचारित्रादिगुणोपेतः ॥

इति धर्मवर्णनम् ॥ ५८ ॥

अथ अर्थपुरुपार्थवर्णनम्—

तथा श्रीशब्देन अर्थः प्रतिपाद्यते, स च द्वितीयः पुरुपार्थः, सोऽपि वर्णनीय इति, तया श्रिया सह साम्यमालम्बतेऽयं विहारः। कीदृशी श्रीः? 'गम्' गत्वरी विनश्वरीत्यर्थः। तथा 'भीरा' भयप्रदा, राज-दायाद-तस्कर;वह्नि-जलप्रभृतिभिर्भयमेव वितरतीत्यर्थः। 'श्रुतिभिः' श्रुतं विद्यते येषां ते श्रुतिनः—श्रुतधरास्तैः श्रुतिभिः 'सदा' सह खण्डनेन इयं वर्तते इत्यभिहिता। 'रणतः' सङ्ग्रामात् 'प्राप्तप्रतिष्ठोदया' लब्धोन्नतिः। 'सत्कान्ता' सतां—शिष्टानां कं—सुखं अन्तयति या सा सत्कान्ता।न रचितप्रिया। 'अबहुगुणाः' निर्गुणा इत्यर्थः॥

इत्यर्थपुरुपार्थवर्णनम्॥ ५९॥

अथ कामपुरुपार्थवर्णनम्—

तथा श्रिया उपलक्षितः इः—कामस्तेन सह साम्यमालम्बतेऽयं विहारः। कीदृशः कामः? गम्भीरः, काभिः? 'श्रुतिभिः' सुरतकूजनश्रवणैः। 'सदा' सर्वकालं 'रणतः' प्राप्तप्रतिष्ठः। 'अदयः' निःकरुणः, कामिकुरङ्गव्यापादने लुब्धक इव। सतां—पुरुपाणां कान्तानां—तत्कलत्राणां च 'रचितप्रियः' रचिताश्लेपसुखः। 'बहुगुणः' अत्रुटितप्रत्यञ्चकोदण्ड इत्यर्थः। इति कामपुरुपार्थवर्णनम्॥ ६०॥

अथ मोक्षपुरुपार्थवर्णनम्—

तथा 'श्रीमद्वा' श्रीः—अनन्तज्ञानदर्शनसुखवीर्यात्मिका सा विद्यते येषां ते श्रीमन्तः—सकलकर्मक्षयसिद्धास्तेषां वानं—गमनं यत्र स श्रीमद्वा—मोक्षः तेन सह साम्यमालम्बतेऽयं विहारः। कीदृशश्चतुर्थः पुरुपार्थः? 'गम्भीरः' अनन्तसिद्धानामवकाशदानात्। 'श्रुतिभिः' पूर्वा-

वस्थायां श्रुतज्ञानवद्भिः सिद्धैरुपलक्षितः। 'सदा' सर्वदा नित्य इत्यर्थः। 'चरणतः' चारित्रात् 'प्राप्तप्रतिष्ठोदयः' लब्धप्रतिष्ठ उदयः-अभ्युदयो यस्य सः। सतां—साधूनां कान्तं—कमनीयं आरचितं प्रियं—शाश्वतसुखं येन सः। 'बहुगुणः' ज्ञानदर्शनचारित्रगुणालङ्कृतः॥

इति मोक्षपुरुषार्थवर्णनम् ॥ ६१ ॥

अथ मूर्त्तिमत्सरस्वतीवर्णनम्—

तथा श्रीमद्वाचा—श्रीसरस्वत्या सह साम्यमालम्बतेऽयं विहारः। श्रीवाक् कीदृशी ? गम्भीरा, काभिः? 'श्रुतिभिः' श्रुतं—शास्त्रं विद्यते येषां ते श्रुतिनः—श्रुतधरास्तैरुपलक्षिता, सेवार्थमागतैः। 'सदा' सर्वदा अहर्निशं 'चरणतः' पादादारभ्य प्राप्तप्रतिष्ठः—समचतुरस्र उदयः—उत्सेधो यस्याः सा। 'सत्कान्ता' शोभनमस्तकपर्यन्ता। 'रचितप्रिया' रचितवरदाना महाकवीनाम्। 'बहुगुणा' समस्तगुणनिधानम्॥

इति मूर्त्तिमत्सरस्वतीवर्णनम् ॥६२॥

अथ वचनरूपवाग्वर्णनम्—

तथा वचनरूपया श्रीमद्वाचा सह साम्यमालम्बतेऽयं विहारः। श्रीवाक् कीदृशी ? गम्भीरा, काभिः ? 'श्रुतिभिः' संस्कृत—प्राकृत—मागध—शौरसेन—पैशाचिका—ऽपभ्रंशशब्दश्रवणैः। यद्वा गम्भीरा, कैः? 'श्रुतिभिः' श्रुतज्ञानशालिभिः, अनेकार्थतां प्रापिता गणधरैरित्यर्थः। 'सदा' सर्वदा 'रणतः' शब्दात् प्राप्तौ प्रतिष्ठाऽउदयश्च यया सा। सत्सु-विद्वत्सु कान्ता-कमनीया सत्कान्ता। रचितं रचना वैदर्भी-गौडीय पाञ्चालीरूपा तेन प्रिया-सकलजगद्वल्लभा। 'बहुगुणा' ओजः प्रभृतिगुणोपेता॥

॥ इति वचनरूपवाग्वर्णनम् ॥ ६३ ॥

अथ श्रीमदाज्ञावर्णनम्—

तथा श्रीमतः वाक् श्रीमद्वाक्—आदेशलक्षणा तया सह साम्यमालम्बतेऽयं विहारः। कीदृशी श्रीमद्वाक्? गम्भीरा, काभिः?'श्रुतिभिः' परजनप्रतिपादितप्रतिश्रुतिश्रवणैः। तथा 'सदा' सततं 'आचरगतः' सेवकः आज्ञापितविशेषविधानात् 'प्राप्तप्रतिष्ठोदया' लब्धमाहात्म्या। सत्सुआदेशकारिषु कान्तारचितं प्रियं—अभिप्रेतं यस्याः सा 'सत्कान्तारचितप्रिया। 'बहुगुणा' प्रभूतगुणा

इति श्रीमदाज्ञावर्णनम् ॥६४॥

अथ सुभटवर्णनम्—

तथा भटेन—सुभटेन सह साम्यमालम्बतेऽयं विहारः। कीदृशो भटः? 'गम्भीरः' प्रगल्भः। काभिः? 'श्रुतिभिः' प्रतिभटढक्काश्रवणैः। 'सदा च' सततं 'रणतः' 'सङ्ग्रामात् प्राप्तौ प्रतिष्ठा उदयश्च येन सः। 'सत्कान्तारचितप्रियः' सत्—शतसहस्रयोधितया शोभनं कान्तं—कमनीयं यत् आरं—अरिसमूहस्तेन 'चितं' उपचितं—प्रियं सन्तोषो येन सः। 'बहुगुणः' बहुप्रत्यञ्चाग्रहणशीलः ॥

इति सुभटवर्णनम् ॥ ६५ ॥

अथ मन्त्रवादिवर्णनम्—

तथा 'मन्त्रिणा' मन्त्रवादिना सह साम्यमालम्बतेऽयं विहारः। मन्त्रवादी कीदृशः? गम्भीरः, काभिः? 'श्रुतिभिः' मन्त्रबलोपार्जितकीर्त्तिश्रवणैः। 'सः' मन्त्रवादी दा—खण्डनं शत्रूणामिति गम्यम्, यद्वा मन्त्रबलेन आत्मजिह्वादिच्छेदः—खण्डनं चरणं—विषादेः सञ्चरणं भक्षणं च तस्मात् प्राप्ता प्रतिष्ठा—मन्त्रवादिषु प्रसिद्धिः उदयः—समृद्धिश्च येन

सः। सत्कान्तया—प्रियया मन्त्रबलेन आकृष्टया रचितं प्रियं—आश्लेषादिकं येन सः। 'बहुगुणः' बहून् वारान् गुणयति मन्त्रमिति बहुगुणः, भूयो भूयो मन्त्रपरावर्तनपर इत्यर्थः ॥

इति मन्त्रवादिवर्णनम् ॥ ६६ ॥

**अथ पथिकवर्णनम्—**

तथा परिवाति—गच्छति परिवाः—पथिकः तेन सह साम्यमालम्बतेऽयं विहारः। कीदृशः पथिकः? 'गम्' गमनकर्ता सर्वदेशेषु। भिया राजते कान्तारादौ व्याघ्रादिभ्यो भयं भजतीति भीरः। 'सदा' सततं 'चरणतः' चरणाभ्याम् 'प्राप्तप्रतिष्ठोत्' लब्धमाहात्म्योक्तिः अयः—गमनं यस्य सः। सत्सु—शोभनेषु कान्तारेषु चितं—उपचयप्राप्तं प्रियं यस्य सः। 'बहुगुणः' प्रचुरभ्रमणेन उपात्तप्रचुरगुण इत्यर्थः ॥

इति पथिकवर्णनम् ॥६७॥

**अथ भक्षणशीलाया वर्णनम्—**

तथा आदिन्या—भक्षणशीलया सह साम्यमालम्बतेऽयं विहारः। कीदृशी आदिनी? गम्भीरा, काभिः? 'श्रुतिभिः' यावद्दीयमानभक्तश्रवणैः। 'सदा' सर्वदा 'चरणतः' भक्षणात् 'प्राप्तप्रतिष्ठोदया' लब्धोन्नतिः। सत्—नित्यं यत् कान्तारत्वं लक्षणया बहुभक्षित्वं तेन चितं—उपचितं प्रियं यस्याः सा। 'बहुगुणा' प्रचुरान्नभक्षणगुणा ॥

इति भक्षणशीलाया वर्णनम् ॥ ६८ ॥

**अथ सर्पिणीवर्णनम्—**

तथा परितः—समन्तात् वाति—गच्छति परिवाः—वायुः तदादिन्या—सर्पिण्या सह साम्यमालम्बतेऽयं विहारः। कीदृशी सर्पिणी? 'गम्'

गमनकर्त्री, विलादो गत्वरीत्यर्थः। 'भीरा' भयप्रदा। 'सदा' सह खण्डनेन वर्त्तन्ते दंशखण्डनप्रवणत्वाद् ये ते अचरणाः—सर्पास्तेभ्यः 'प्राप्तप्रतिष्ठोदया' लब्धजन्मोन्नतिः। सती चासौ कान्ता च सत्कान्ता—सर्पाणां भार्येत्यर्थः। न रचितं प्रियं—अभीष्टं यया सा। अवहुगुणा, सदोषत्वात् तस्याः॥

इति सर्पिणीवर्णनम्॥ ६९॥

अथ स्वैरिणीवर्णनम्—

तथा 'परिवादिन्या' परिवदतीत्येवंशीला परिवादिनी तया परिवादिन्या—दोषोद्घट्टनपरायणया सह साम्यमालम्बतेऽयं विहारः। कीदृशी परिवादिनी? 'गम्' परपुरुषेषु गमनकर्त्री।'भीरा' भर्तुः भयप्रदा 'श्रुतिभिः' जनप्रवादश्रवणैः 'सदा' सर्वदा 'अचरणतः' अचारित्रात् स्वैराचारात् 'प्राप्तप्रतिष्ठोदया' सर्वत्र स्वैरिणीति प्रतिष्ठिता। 'सत्कान्ता' सत्कः—स्वसम्बन्धी भर्ता तं अन्तयति या सा सत्कान्ता। न रचितं प्रियं प्रियस्य यया सा। यद्वा न रचितः—न चेतसि न्यस्तः प्रियः—स्वपतिर्यया सा। यद्वा सत्कान्तस्य—परिणीतभर्त्तुर्न रचितप्रिया अपि तु प्रतिकूलवर्त्तिनी। अत एव 'अवहुगुणा' निर्गुणा॥

इति स्वैरिणीवर्णनम्॥ ७०॥

अथ पण्डिताया वर्णनम्—

तथा 'वादिन्या' वादलब्धिसम्पन्नया—पण्डितया सह साम्यमालम्बतेऽयं विहारः। कीदृशी पण्डिता? 'गम्' 'सर्वे गत्यर्था ज्ञानार्थाः' गमं—ज्ञानं करोति 'णिज् वहुलं नाम्नः कृगादिषु' (सिद्ध० ३।४।४२) इति णिच्, 'क्विप्' (सिद्ध० ५।१।१४८) इति क्विप्, तयोर्लोपे

गम्—ज्ञानकर्त्री सेवकजनस्य । 'भीरा' भयप्रदा प्रतिवादिनाम् । काभिः ? 'श्रुतिभिः' सकलशास्त्रश्रवणैः । सदा वरदा—सरस्वती तस्याः 'चरणतः' पादप्रसादात् प्राप्ता प्रतिष्ठा उत्—जल्पनं अयः—ज्ञानं यस्याः सा । 'सत्कान्ता' शोभनः—नित्यः यः कः—ब्रह्मा तं अन्तयति बुद्ध्या विनाशयति—जयति या सा । यद्वा सत्सु—शिष्टेषु परिषत्सु वा कान्ता—कमनीया वादलब्धियुक्तत्वात् । आरचितं—निर्मितं प्रियं—आत्माभीष्टं यया, पराभूतपरवादिपरम्परा इत्यर्थः । 'बहुगुणा' गाम्भीर्यादिगुणवती ॥

॥ इति पण्डिताया वर्णनम् ॥ ७१ ॥

अथ सुभगवर्णनम्—

तथा 'श्रीमता' श्रीः—शोभा तया एरिव—कामस्येव इः—आकारः स विद्यते यस्य स श्रीमान् तेन श्रीमता—रूपशालिना सह साम्यमालम्बतेऽयं विहारः । कीदृशः सुभगः ? 'गम्भीरः' गम्भीरहृदयः गम्भीरनाभिकुहरो वा । श्रुतं विद्यते येषां ते श्रुतिनः—श्रुतशालिनः पण्डितास्तैरुपलक्षितः । 'सः' सुभगः दा—दानेन चोपलक्षितः, 'आचरणतः' आ पादद्वयात् प्राप्तप्रतिष्ठोदयः, समचतुरस्रसंस्थान इत्यर्थः । 'सत्कान्तारचितप्रियः' सत्कान्ताः—शोभनस्त्रियः तासां रचितप्रियः—अतीववल्लभः, यद्वा सत्—शोभनं कान्तं—कमनीयं यत् आ—समन्तात् रचितं—रचना तेन प्रियः । 'बहुगुणः' 'यत्राकृतिस्तत्र गुणा वसन्ति' सुभगतया गुणिसंसर्गः, गुणिसंसर्गेण च गुणाः केचित् कदाचित् पुरुषे वसन्तीति सकलगुणोपेतः ॥

इति सुभगवर्णनम् ॥ ७२ ॥

अथ वात्स्यमहर्षिवर्णनम्—

तथा विबुध इति पदे वि–शब्दोऽस्ति तद्विशेष्यम्, उशब्देन तरः अभिधीयते, ततः तरसा इबुधः–कामपण्डितः कामशास्त्रप्रणेता वात्स्यायनः तरसा–वेगेनेति साभिप्रायम्। एवं किल प्रतिपादयन्ति-धीमन्तः, यथा—पूर्वं वात्स्यायननामा महर्षिः कुमारब्रह्मचारी तपश्चरणबलेन सह देहेन नाकमाजगाम। गतवति च देवलोकं तस्मिन्निन्द्रसभापतिभिरुक्तम्, कथमेष स्वर्गमाजगाम? न तावदनेन सुरसदन-प्रपा-तडागादिकं धर्मस्थानं चाकारि, द्रविणाभावात्। द्रविणाभावोऽपि निःसङ्गतयाऽनेन निर्ममे। शास्त्रं वाऽनेन पूर्वं किमपि विरचितं न। न चाऽनन्यसदृशकीर्तिकीर्त्तनीयचरितं धर्मस्थानमन्तरेण सह देहेन स्वर्गः समारोढुं शक्यते। अयं च तपोबलेनैव स्वर्गविमानेषु मानिनीर्मानयितुमिच्छति तन्न युक्तमिति हुङ्कृतं सुरपतिसभासद्भिः। तेन च हुङ्कारेण स वात्स्यायनमहर्षिरर्कतूलमिव वातेन पातितः पृथिव्याम्। पश्चाद् धर्मशास्त्राणि तानि तानि तेन तेन पूर्वपुरुषेण कृतानीति परिभाव्य तरसा कामशास्त्रं चिकीर्षुः परपुरप्रवेशविज्ञानेन राज्ञः पट्टमहादेवीं परलोकगामनुप्रविश्य राज्ञः सकाशात् सकलसुरतरहस्यं विज्ञाय राज्ञीकलेवरं परित्यज्य महर्षिर्भूत्वा धर्माय कामशास्त्रं तरसा चकार। कृत्वा च सह देहेन पुनर्नाकं जगाम। ततश्च कथितरीत्या तरसा बुधो बभूव। तेन च सह साम्यमालम्बतेऽयं विहारः। कीदृशः वात्स्यायनः? 'गम्भीरः' अलब्धमध्यः, काभिः? 'श्रुतिभिः' नृपतिकथ्यमानतत्तत्सुरतरहस्योपदेशश्रवणैः। सत्–शोभनं यत् आचरणं–ब्रह्मचर्यपालनं तस्मात् प्राप्तप्रतिष्ठा–लब्धमाहात्म्या उत्–उक्तिर्यस्य सः। अयः–अनु-

कूलदैवमिव सतां—विषयिणां कान्तानां—सकलस्त्रीणां रचितं—निर्मितं प्रियं—सुरता-ऽऽलिङ्गन-चुम्बन-नखक्षतादिकं येन सः। 'वहुगुणः' प्रचुरगुणापेतः ॥

इति वात्स्यमहर्षिवर्णनम् ॥ ७३ ॥

## अथ भौतिकतापसवर्णनम्—

तथा उ—शब्देन हरोऽभिधीयते तस्येव इः—आकारो यस्य, सन्धि-कार्ये कृते सति 'विः' भवति। तेन विना—हराकारेण भौतिकताप-सेन सह साम्यमालम्बतेऽयं विहारः। कीदृशः भौतिकतापसः? 'गम्' गमनकर्ता सर्वतीर्थेषु सर्वशिवालयेषु। 'भीरः' भयप्रदः, काभिः? श्रुतिभिः। 'सदा' सर्वकालं 'चरणतः' चङ्क्रमणाद् गृहे गृहे पर्यट-नात् प्राप्तप्रतिष्ठ उदयः—अभ्युदयो यस्य सः। सन्—नित्यो महेश्वरः तत्कान्ते—गौरीगङ्गे तयोर्विषये यद् रचितं—भक्तिविरचना तत् प्रियं यस्य सः। 'वहुगुणः' प्रचुररजस्तमोगुणः ॥

इति भौतिकतापसवर्णनम् ॥ ७४ ॥

## अथ हरमौलिवर्णनम्—

तथा उ—शब्देन हरमौलिरभिधीयते तस्येव इः—आकारः सन्धि-कार्ये कृते सति 'विः' तेन सह साम्यमालम्बतेऽयं विहारः। कीदृशो हरमौल्याकारः? गम्भीरः, काभिः? 'श्रुतिभिः' गङ्गाजलक्षरण-झात्कारश्रवणैः। 'सदाचरणतः' सद्वेष्टनाचरणात् 'प्राप्तप्रतिष्ठोदयः'

प्राप्तोन्नतिः । सत्–नित्यो महेश्वरस्तस्य कान्तयोः–गौरीगङ्गयो रचितं प्रियं येन सः । ' बहुगुणः ' बहुभिर्गुणैर्ग्रथितः ॥

इति हरमौलिवर्णनम् ॥ ७५ ॥

## अथ गौरीस्तनतटवर्णनम्—

तथा उकारेण गौरीहृदयमभिधीयते, तस्य इः–आकारः तेन सह साम्यमालम्बतेऽयं विहारः । कीदृशः गौरीहृदयाकारः ? गम्भीरः, काभिः ? ' श्रुतिभिः ' हारार्द्धहारझात्कारश्रवणैः । ' सदा 'सह दा–नखक्षतखण्डनेन वर्तते यः स सदा, स चासौ अचरणश्च अचरणाः–सर्पाः हरकण्ठस्थितास्तान् तस्यति इति 'क्विचित् ' (सिद्ध० ५ । १ । १७१ ) इति डः ' डित्यन्त्यस्वरादेः ' ( सिद्ध० २ । १ । ११४ ) इत्यन्त्यस्वरादिलोपः, निर्दयाश्लेषसमये हरवक्षसि क्रीडापरायणान् सर्पान् पिनष्टीत्यर्थः । तथा ' प्राप्तप्रतिष्ठोदयः ' प्राप्तप्रतिष्ठ उदयः स्तनोन्नतिर्यत्र सः । सन्–नित्यो योऽसौ कान्तः–महेश्वरस्तस्य आरचितं प्रियं–आश्लेषसुखं येन सः । ' बहुगुणः ' प्रचुरहारगुणविराजितः ॥

इति गौरीस्तनतटवर्णनम् ॥ ७६ ॥

## अथ चन्द्रकरवर्णनम्—

तथा उकारेण शशधरकिरणा अभिधीयन्ते, तेषां इः–आकारः सन्धौ कृते सति ' विः ' भवति, तेन सह साम्यमालम्बतेऽयं विहारः । कीदृशः शशधरकराकारः ? गम्भीरः, काभिः ? ' श्रुतिभिः '

शास्त्रवर्णिततत्तत्स्वरूपश्रवणैः । सततशैत्याधानेन यदाचरणं—क्रिया तस्मात् प्राप्ता प्रतिष्ठा उदये—उदयपर्वते येन सः । सतां—शिष्टानां कान्तानां—स्त्रीणां रचितं प्रियं—आह्लादो येन सः, अत एव 'वहुगुणः' सकलजनोपकारकरणेन सद्गुण इत्यर्थः ॥

इति चन्द्रकरवर्णनम् ॥ ७७ ॥

**अथ चारित्राद् यादृक् चित्तं भवति तादृग् वर्णनम्—**

तथा उशब्देन चित्तमभिधीयते, तदेव इः—गम्भीरतया गिरिकुहरं तेन सह साम्यमालम्बतेऽयं विहारः । कीदृशं चित्तकुहरम् ? गम्भीरम्, काभिः ? 'श्रुतिभिः' शास्त्रश्रवणैः, गिरिकुहरं च गम्भीरं भवति, यथा कृतशब्दप्रतिशब्दश्रवणैः । 'सदा' सर्वदा 'चरणतः' चारित्रात् 'प्राप्तप्रतिष्ठोदयम्' लब्धमाहात्म्योन्नतिः। गिरिकुहरं च 'सदा' [ सह ] खण्डनेन वर्तन्ते ये ते सिंहप्रभृतिश्वापदाः। तथा 'अचरणाः'सर्पास्तेभ्यः 'प्राप्तप्रतिष्ठोदयम्' प्राप्तप्रतिष्ठोद्गमम् । तथा चित्तं सतां—शिष्टानां कान्तानां च रचितं प्रियं येन तत्, गिरिकुहरं च 'सत्कान्ते-( न्तारे' ) सदरण्ये चिता—उपचिता वृक्षास्तैः प्रियम् । चित्तं कीदृशम् ? 'वहुगुणम्' गाम्भीर्यादिगुणगणाधारम्, गिरिकुहरं च वहुभयरक्षणादिगुणजनकम् ॥

इति चारित्राद् यादृक् चित्तं भवति तादृग् वर्णितम्॥७८॥

**अथ उल्कावर्णनम्—**

तथा उशब्देन उल्काऽभिधीयते तस्या इः—आकारः सन्धौ कृते सति 'विः' भवति, तेन विना सह साम्यमालम्बतेऽयं विहारः। उल्काकारः

कीदृशः ? ' गम् ' ज्वलनस्वभावादितस्ततो गन्ता । ' भीरः ' भयप्रदः, काभिः ? 'श्रुतिभिः'धगद्धगितिशब्दश्रवणैः । 'सदा' सर्वदा 'चरणतः' भक्षणात् यथाप्राप्तेन्धनचर्पणात् 'प्राप्तप्रतिष्ठोदयः' लब्धोन्नतिः। सत्कान्तारे–बहुलारण्ये चितं–उपचितं 'प्रियं' दाहकरणलक्षणं यस्य सः । 'बहुगुणः' प्रचुरजाड्यापहारादिगुणः ॥

इति उल्कावर्णनम् ॥ ७९ ॥

अथ आस्यवर्णनम्—

तथा उशब्देन आस्यमभिधीयते, तस्य इः–आकारः तेन सह साम्यमालम्बतेऽयं विहारः । कीदृश आस्याकारः ? गम्भीरः, काभिः ? 'श्रुतिभिः' शास्त्रश्रवणैः । 'सदा' सर्वदा 'रणतः' शब्दात् 'प्राप्तप्रतिष्ठोदयः' स्पष्टवागुच्चारणेन लब्धमाहात्म्यः । सत्कान्तायाः–सुकलत्रस्य ' रचितप्रियः' निर्मितचुम्बनादिव्यापारः । यद्वा सत्कान्तः–नित्यकमनीयः स चाऽसौ आरचितप्रियश्चयः सः । 'बहुगुणः' प्रचुरकान्त्यादिगुणोपेतः ॥

—

इति आस्यवर्णनम् ॥ ८० ॥

अथ शुकवर्णनम्—

तथा विषु–पक्षिषु बुधः–पण्डितः–जात्यशुकस्तेन सह साम्यमालम्बतेऽयं विहारः । कीदृशः शुकः ? 'गम्' गमं–विहायसि गमनं करोति 'णिज् बहुलं०'(सिद्ध० ३ । ४। ४२) णिज्, क्विप्, तयोर्लोपे गम्–गमनकर्ता इत्यर्थः । 'भीरः' भिया मार्जारादिभयेन ईरः–कम्पो यस्य सः । काभिः स ईदृशः ? 'श्रुतिभिः' मार्जारादिशब्दश्रवणैः । 'सदा' सर्वदा च 'रणतः' शब्दात् व्यक्तवर्णोच्चारलक्षणात्

'प्राप्तप्रतिष्ठोदयः' लब्धोन्नतिरित्यर्थः । सत्कान्ता—शुकी तया सह 'रचितप्रियः' निर्मितसुरतप्रीतिः । 'बहुगुणः' सर्वगुणसम्पन्न इत्यर्थः ॥

इति शुकवर्णनम् ॥ ८१ ॥

अथ सर्पदृष्टिवर्णनम—

तथा उशब्देन नेत्रमभिधीयते तस्य इः—आकारः, सन्धौ सति विः, तेन सह साम्यमालम्बतेऽयं विहारः । कीदृशो नेत्राकारः ? गम्भीरः, काभिः ? 'श्रुतिभिः' श्रवणैः, 'दृक्श्रुतयो भुजङ्गमाः' ( हलायुधकृता अभिधानरत्नमाला श्लो. ३ । १८ ) इति वचनात् सर्पदृष्टेराकारोऽभिधीयते, असाधारणविशेषणाद् विशेष्यावगतिः । 'सदा' सर्वदा 'अचरणतः'सर्पविशेषात् 'प्राप्तप्रतिष्ठोदयः' लब्धोदयः। संश्चासौ कान्तश्च सत्कान्तः स चासौ अरचितप्रियश्च अत एव 'अबहुगुणः' सदोषः ॥

इति सर्पदृष्टिवर्णनम् ॥ ८२ ॥

अथ कामिवर्णनम्—

तथा ऊकारेण चन्द्रोऽभिधीयते, तस्माद् उद्दीपनविभावाद् इः—कामो यस्य विः—कामी, तेन कामिना सह साम्यमालम्बतेऽयं विहारः। कीदृशः कामी ? गम्भीरः, काभिः ? 'श्रुतिभिः' विविधरागप्रतिबद्धगीतश्रवणैः । सत्—वात्स्यायनमहर्षिप्रणीतत्वेन शोभनं यदाचरणं-नखक्षतचुम्बनालिङ्गनादि कर्म तस्मात् प्राप्तप्रतिष्ठ उदयो यस्य सः । सत्कान्तानां—शोभनप्रियाणां रचितं प्रियं—सुरतादि येन सः। 'बहुगुणः' प्रचुरकान्त्यादिगुणोपेतः ॥

इति कामिवर्णनम् ॥ ८३ ॥

अथ कामिनीवर्णनम्—

तथा ऊशब्देन पुरुषोऽभिधीयते, तस्येव इः—काम आकारो वा यस्याः सा, पुरुषायितरतप्रिया कामिनीत्यर्थः, तया सह साम्यमालम्बतेऽयं विहारः । कीदृशी कामिनी ? 'गम्भीरा' अलब्धमध्या, काभिः? 'श्रुतिभिः' सुरतकूजितस्वरश्रवणैः । 'सदा' सर्वदा 'चरणतः' चरणाभ्यां किञ्चिदचञ्चलाभ्यां चञ्चलाभ्यां च 'प्राप्तप्रतिष्ठः' प्रगल्भ उत्पतनं यस्याः सा । सती चासौ कान्ता च सा । रचितः प्रियो—भर्ता यया सा, सभर्तृका इत्यर्थः । 'बहुगुणा' सकलस्त्रीगुणोपेता ॥

इति कामिनीवर्णनम् ॥ ८४ ॥

अथ सामन्तवर्णनम्—

तथा ऊकारेण राजन्नोऽभिधीयते, तस्येव इः—आकारो यस्य सामन्तस्य तेन विना सह साम्यमालम्बतेऽयं विहारः । कीदृशः सामन्तः ? 'गम्' शत्रुविजयाय गमनकर्ता । 'भीरः' भयप्रदः शत्रूणाम् , काभिः ? 'श्रुतिभिः' प्रयाणश्रवणैः। 'सदा च' सर्वदा 'रणतः' सङ्ग्रामात् 'प्राप्तप्रतिष्ठः' लब्धमहिमा। तथा 'अदयः' शत्रुघाते निर्दयः। सन्तः—सुभटास्ते कान्ता इव तासां 'रचितप्रियः' निर्मितसन्मानदानः । यद्वा सन्तः—प्रतिसुभटास्ते कान्ता इव तासां न रचितप्रियः, दृढप्रहारदानेन तेषां स्त्रीप्रायाणां प्राणहर्तेत्यर्थः । 'बहुगुणः' प्रचुरशौर्यादिगुणोपेतः ॥

इति सामन्तवर्णनम् ॥ ८५ ॥

अथ मांसाहारिवर्णनम्—

तथा ऊकारेण जाङ्गलं भण्यते, तत्र विषयसप्तम्याः 'वि' इति भवति, ततः वि—मांसे बुधः—मांसाहारी, तेन सह साम्यमालम्बतेऽयं विहारः। कीदृशो मांसाहारी? 'गम्' गमनकर्ता पशुवधार्थं वनादौ। 'भीरः' भयप्रदः 'श्रुतिभिः' आरण्यकपशुवधश्रवणैः। 'सदा' सह खण्डनेन वर्तते यत् तच्च तदाचरणं च तस्मात् प्राप्तप्रतिष्ठ उदयः—शरीरोपचयो यस्य सः। सति—पशुश्वापदैः शोभने कान्तारे—अरण्ये चितं—उपचितं प्रियं—आखेटकादिकं यस्य सः। एकस्यां प्रत्यञ्चायां अपरापरप्रत्यञ्चार्थं कृतप्रयत्नत्वात् 'बहुगुणः' इत्युच्यते॥

इति मांसाहारिवर्णनम्॥ ८६॥

अथ दयालुवर्णनम्—

तथा अवनं ऊः तत्र विषये रक्षायां बुधः—पण्डितः—रक्षाविचक्षणः दयापरायण इत्यर्थः, तेन सह साम्यमालम्बतेऽयं विहारः। कीदृशो रक्षाकारी? गम्भीरः, काभिः? 'श्रुतिभिः' सदागमश्रवणैः। सत्—शोभनं आचरणं—आचारः तस्मात् प्राप्तप्रतिष्ठ उदयो—महिमा यस्य सः। सतां—शिष्टानां कान्तः स चाऽसौ आरचितप्रियश्च 'आरचितप्रियो' निर्मिताह्लादः। 'बहुगुणः' दयादाक्षिण्यादिगुणोपेतः॥

इति दयालुवर्णनम्॥ ८७॥

अथ जाङ्गडचरवर्णनम्

तथा ऊशब्देन जाङ्गडो नरविशेषोऽभिधीयते, तद्विषये योऽसौ बुधः—चरविशेषः तेन सह साम्यमालम्बतेऽयं विहारः। कीदृशो जाङ्गड-

विपये चरः ? 'गम्भीरः' अलब्धमध्यः, काभिः ? 'श्रुतिभिः' तत्र राज्यराष्ट्रव्यवहारवार्त्ताश्रवणैः। 'सदा' सर्वदा 'चरणं' चङ्क्रमणं येषां ते सदाचरणाः—प्रतिचरविशेषास्तेभ्यः प्राप्तप्रतिष्ठा उत्—जल्पनं अयश्च—ज्ञानं वा यस्य सः। सत्कान्तारे—अतिशयगहनारण्ये चितं—उपचितं प्रियं—प्रच्छन्नावस्थानादिकं यस्य सः, प्रायेण कान्तारवासेनाऽन्तरान्तरालनगरगमनेन स्वप्रभुप्रियं विरचयतीत्यर्थः। 'वहुगुणः' स्वरूपगोपनेनाऽप्रकटितात्मीय (स्वरूप) इत्यर्थः॥

इति जाङ्गडचरवर्णनम्॥ ८८॥

## अथ रत्नपरीक्षकवर्णनम्—

तथा ऊकारेण मणयोऽभिधीयन्ते तेषां इः—आकारस्तेन सह साम्यमालम्बतेऽयं विहारः। कीदृशो रत्नपरीक्षकः? गम्भीरः, काभिः? 'श्रुतिभिः' रत्नपरीक्षाशास्त्रश्रवणैः। 'सः' परीक्षकः दा—खण्डनेन—ताडनेन चरणात्—भक्षणात् शुद्धं रत्नं स्वल्पतृणादि चरति—ग्रसते यत्तचरणमभिधीयते तस्मात् प्राप्तप्रतिष्ठ उदयः—अभ्युदयो यस्य सः। सन्तः—शोभना ये कान्ताः—चन्द्रकान्तसूर्यकान्ताः 'ते लुवा' (सिद्ध ३।२।१०८ इत्यनेन सूत्रेण चन्द्ररविपादयोरावयोर्लोपात् तैः आरचितं प्रियं येन सः। 'वहुगुणः' प्रचुररत्नज्ञानगुणः॥

इति रत्नपरीक्षकवर्णनम्॥ ८९॥

## अथ प्राङ्गणवर्णनम्—

तथा ऊशब्देन प्राङ्गणमभिधीयते, तस्य इः—आकारः, सन्धौ सति 'विः' भवति तेन विना सह साम्यमालम्बतेऽयं विहारः। कीदृशः

१ रवि कपाठः.

प्राङ्गणाकारः ? गम्भीरः, काभिः ? 'श्रुतिभिः' श्रुतशालिभिः । सत् आचरणं येषां ते सदाचरणाः—सत्पुरुषास्तेभ्यस्ततः 'प्राप्तप्रतिष्ठोदयः' अवाप्ताभ्युदयः। सत्कान्ताभिः—सुकलत्रैर्यत् कृतं—रचितं—रचना स्वस्तिकादिकं तेन प्रियः—वल्लभः । 'बहुगुणः' प्रचुरगुणालङ्कृतः ॥

इति प्राङ्गणवर्णनम् ॥ ९० ॥

**अथ मङ्गलकान्तिवर्णनम्—**

तथा ऊकारेण मङ्गलमभिधीयते, ततः इः—कान्तिः, सन्धौ सति 'विः' भवति, तया कान्त्या सह साम्यमालम्बतेऽयं विहारः । कीदृशी मङ्गलकान्तिः ? गम्भीरा, 'श्रुतिभिः' श्रुतसम्पन्नैः ।'सदा' सततं 'चरणतः' चारित्रात् प्राप्तप्रतिष्ठ उदयः—अभ्युदयो यस्यां सा । रचितं प्रियं यया सा । तथा 'बहुगुणा' प्रचुरगुणकारिणी ॥

इति मङ्गलकान्तिवर्णनम् ॥ ९१ ॥

**अथ निधिकलशवर्णनम्—**

तथा ऊशब्देन कलशोऽभिधीयते, तस्य इः—आकारः तेन सह साम्यमालम्बतेऽयं विहारः । कलशः कीदृशः ? 'गम्भीरः' अलब्धमध्यः, निधिकलशस्य हि अन्तःप्रमाणं ज्ञातुं न शक्यते 'श्रुतिभिः' वेदैः, स हि निःसृतः समुद्रात् । सतां आचरणं सदा यत् आचरणं तस्मात् 'प्राप्तप्रतिष्ठः' लब्धप्रसिद्धिः।'दयः' सकलवाञ्छितवस्तुदाता, अतो विशेषणाद् निधिकलश इति प्रतीयते ।'सत्कान्तारचितप्रियः' सन्—नित्यो विष्णुस्तस्य कान्ता—लक्ष्मीस्तया 'रचितप्रियः' विरचिताभिप्रेतः, अत एव 'बहुगुणः' सकलगुणविभूषितः ॥

इति निधिकलशवर्णनम् ॥ ९२ ॥

अथ जलचरवर्णनम्—

तथा पूर्ववत् ऊशब्देन कलशोऽभिधीयते, तस्यैव इः—आकारो यस्य जलचरस्य स विः, तेन सह साम्यमालम्बतेऽयं विहारः। कीदृशो जलचरः? गम्भीरः, काभिः 'श्रुतिभिः' समुच्छलज्जलश्रवणैः। 'सदा' सर्वदा 'चरणतः' चङ्क्रमणात् 'प्राप्तप्रतिष्ठोदयः' लब्धजीवनवृत्तिः। यद्वा 'चरणतः' भक्षणात् 'प्राप्तप्रतिष्ठः' लब्धशरीरस्थितिः 'अदयः' निर्दयः अपरसूक्ष्मजलचरभक्षणात्। तदुक्तम्—

'अस्ति मत्स्यस्तिमिर्नाम शतयोजनविस्तरः।
तिमिङ्गिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति राघव!॥'

सत्कान्तः—निर्मित (निर्मल) जलमध्ये रचितं प्रियं—क्रीडनं येन सः। 'रो रे लुग् दीर्घश्चादिदुतः' (सिद्ध० १।३।४१) इति सूत्रेण सत्कान्ता इति तकाराकारस्य दीर्घः। 'अबहुगुणः' निर्गुणः, पुरुषार्थशून्यत्वात्॥ इति जलचरवर्णनम्॥ ९३॥

अथ देवाकृतिवर्णनम्—

तथा ऊशब्देन देवोऽभिधीयते, तस्य इः—आकारः, सन्धौ सति 'विः' भवति, तेन विना सह साम्यमालम्बतेऽयं विहारः। कीदृशः देवाकारः? गम्भीरः, काभिः? 'श्रुतिभिः' उत्पत्तिसमकालमेव माणवकस्तम्भान्तःस्थितपुस्तकश्रवणैः। 'सदाचरणतः' पूर्वजन्मनि सुकृतविधानात् 'प्राप्तप्रतिष्ठो' देवलोके प्रतिष्ठितः। 'दयः' दाता। सत्कान्ताभिः—प्रधानदेवाङ्गनाभिः रचितं—प्रियं सम्भोगादि येन सः। 'बहुगुणः' अपर्यन्तगुणभाजनम्॥

इति देवाकृतिवर्णनम्॥ ९४॥

अथ वणिग्वर्णनम्—

तथा ऊशब्देन उन्मानमभिधीयते, तत्र विषये योऽसौ वुधः—वणिक् तेन सह साम्यमालम्बतेऽयं विहारः। कीदृशो वणिक्? गम्भीरः, । काभिः? 'श्रुतिभिः' क्रयिककोलाहलशब्दश्रवणैः । तथा 'सदा' सह दा—सह खण्डनेन परवञ्चनलक्षणेन वर्तते यत् तत् आचरणं—आचारस्ततः 'प्राप्तप्रतिष्ठः' लब्धमहाविभवः। 'अदयः' कूटतुलाकूटमान-घृततैलमानाकर्षणेन परमारणान्निःकरुणः । सत्कान्तायाः—शोभन-प्रियाया अपि न रचितप्रियः, अदातृत्वात् । तदुक्तम्—

'द्विजातिकायस्थकिराटकानां का दानशक्तिः परतर्ककाणाम्?।
वैद्योऽपि किं दास्यति याच्यमानो यो मर्तुकामादपि हर्तुकामः॥'

'अबहुगुणः' निर्गुणः । यद्वा ' बहुगुणः ' बहु गुणयति द्रविणमिति बहुगुणः ॥ इति वणिग्वर्णनम् ॥ ९५ ॥

अथ देवाधिदेवप्रतिमावर्णनम्—

तथा 'परिवादिन्या' इति पदे रिकारो विशेष्यम् । ऋकारेण देवाधिदेवोऽभिधीयते, तस्य इः—आकारः—प्रतिकृतिस्तया सह साम्य-मालम्बतेऽयं विहारः। कीदृशी देवाधिदेवप्रतिकृतिः? गम्भीरा, काभिः? 'श्रुतिभिः' श्रुतधरैः। 'सदा' सर्वदा 'आचरणतः' आचरणया 'प्राप्तप्रतिष्ठा', कृतप्रतिष्ठा, तत्त्ववृत्त्या तु सततप्रतिष्ठा । 'उदया' उत्—उद्गतः अयः—अनुकूलं दैवं यया, तत्प्रसादेन अनुकूलं दैवं भवति पुंसामिति तात्पर्यम्। सत्—शोभनः कान्तः—मस्तकपर्यन्तो यस्याः सा। 'बहुगुणा' सकलसमचतुरस्रादिगुणोपेता ॥ इति देवाधिदेवप्रतिमावर्णनम् ॥ ९६ ॥

अर्हद्भक्तवर्णनम्—

तथा पूर्वरीत्या रिशब्देन देवाधिदेवप्रतिमाऽभिधीयते, तां वाति—चन्दनार्थं गच्छति यः सोऽर्हद्भक्तोऽभिधीयते, तेन रिवा—श्रावकेण सह साम्यमालम्बतेऽयं विहारः। कीदृशः श्रावकः? 'गम्भीरः' गम्भीरार्थः सदागमावगाही । श्रुतिनः—गणधरास्तैः 'सदाचरणतः' शोभनाचरणया 'प्राप्तप्रतिष्ठः' आरोपितव्रत इत्यर्थः । 'दयः' दाता । सतां—शिष्टानां कान्तानां—स्त्रीणां वा आरचितं प्रियं येन सः । अत एव 'बहुगुणः' दयादाक्षिण्यादिगुणसहस्रभूषितः ॥

इति अर्हद्भक्तवर्णनम् ॥ ९७ ॥

अथ स्याद्वादवादिवर्णनम्—

तथा रिशब्देन पूर्ववदर्हदाकारस्तस्य मतं वदतीत्येवंशीलः तद्वादी, जैनमतप्रतिष्ठापक इत्यर्थः, तेन सह साम्यमालम्बतेऽयं विहारः । कीदृशो जैनवादी ? 'गम्भीरः' गम्भीरचित्तः, 'श्रुतिभिः' जैनशास्त्रश्रवणैः । 'सदा' सर्वदा 'चरणतः' चारित्रात् प्राप्तप्रतिष्ठश्चासौ उदयश्च अवनं ऊः—सकलजन्तुरक्षा तया दया—करुणा यस्य सः । सत्—नित्यं कायन्ति—शब्दयन्ति ये ते सत्काः—नित्यवादिनस्तान् अन्तयति—मृतानिव करोति नित्यानित्यवादेन यः स सत्कान्तः, स चासौ आरचितप्रियश्च नित्यवादनिरासेन स्याद्वादिनां जनिताभिप्रेतार्थ इत्यर्थः। 'बहुगुणः' प्रचुरज्ञानादिगुणः ॥

इति स्याद्वादवादिवर्णनम् ॥ ९८ ॥

अथ पौरुषवर्णनम्—

तथा ऋशब्देन रिपुरभिधीयते, तत्र रि—शत्रौ वानं वा—गमनं तेन सह साम्यमालम्बतेऽयं विहारः । कीदृशी रिवा? गम्भीरा, काभिः? 'श्रुतिभिः' प्रतिभटानां हक्कादिश्रवणैः। 'सदाचरणं—' शोभनाचारः 'अभिमुखा एव शत्रवो हन्तव्याः, पराङ्मुखास्तु सुभटा मोक्तव्याः' इति लक्षणस्तस्मात् प्राप्तप्रतिष्ठा—लब्धमाहात्म्या । 'उदया' उद्गताऽनुकूलदैवा । सत्सु—विद्यमानेषु भटेषु कान्ता—कमनीया । यद्वा सतां—पुरःस्थसुभटानां कं—मस्तकं अन्तयति या सा सत्कान्ता । रचितं प्रियं—शत्रुविनाशनं यया सा । वहवः—प्रभूताः स्वामिभक्तिपौरुषादयो गुणा यस्याः सा ॥

इति पौरुषवर्णनम् ॥ १९ ॥

अथ विनायकवर्णनम्—

तथा इशब्देन गजोऽभिधीयते, तस्येव इः—आकृतिर्यस्य, गणाधिपस्य गजवदनत्वात् तस्य तदाकारता, तेन सह साम्यमालम्बतेऽयं विहारः। कीदृशो गजवदनः? गम्भीरः, काभिः? 'श्रुतिभिः' मदलुब्धभ्रमद्भृङ्गविरुतिश्रवणैः। 'सदा' सह दानेन—वरवितरणेन वर्तते यत् तच्च तदाचरणं च तस्मात् प्राप्तप्रतिष्ठः । यद्वा देवपर्षदा सह रणतः—सङ्ग्रामात् प्राप्तप्रतिष्ठः। तथाहि—एकदा देवैर्जल्पः प्रारब्धः—यो यो विरूपकः स वहिः क्रियताम्।ततो विघ्नराजेन चिन्तितम्—देवानां मध्येऽहमेव विरूपक इति विचिन्त्य मुद्गरमादाय निगदितम्—कथयत भो भो देवाः! यो देवेषु विरूपकः तं निर्धाटयामीति रणसंरम्भतः प्राप्त-

वस्थानो देवानां पर्षदि । 'अदय:' शत्रुनिपातेन निःकरुणः । सतो—नित्यस्य महेश्वरस्य कान्ता—गौरी तस्या रचितं प्रियं—दर्शनसन्तोष-मुखं येन सः । 'बहुगुणः' प्रचुरगौरवादिगुणगणोपेतः ॥

इति विनायकवर्णनम् ॥ १०० ॥

## अथ गजवर्णनम्—

तथा रिशब्देन गजस्याकारोऽभिधीयते तेन सह साम्यमालम्बतेऽयं विहारः । कीदृशो गजाकारः ? 'गम्' प्रतिगजं प्रति गन्ता । 'भीरः' भयप्रदः, कामिः ? 'श्रुतिभिः' गजगर्जितश्रवणैः । सत्कान्ताभिः रचितं प्रियं—निधुवनं येन सः । बहुगुणः भद्रजातित्वात् ॥

इति गजवर्णनम् ॥ १०१ ॥

## अथ गजाग्रेसरवर्णनम्—

तथा रितः—गजाकाराद् वा—वानं—धावनलक्षणं यस्य स रिवाः—प्रतिकारः तेन सह साम्यमालम्बतेऽयं विहारः । प्रतिकारः कीदृशः ? 'गम्' पुरस्ताद् वेगेन गन्ता । 'भीरः' भियं ईरयति भीरः,निर्भय इत्यर्थः। । 'श्रुतिभिः' करिकरपर्यन्तस्फूत्कारश्रवणैः ' सदा ' सर्वदा 'चरणतः' चरणद्वयप्रसादात् 'प्राप्तप्रतिष्ठः' लब्धख्यातिः। 'दयः' कूर्चिकया आशाप्रदः। सत्कः—स्वसम्बन्धी योऽसौ अन्तः—पर्यन्तः तत्र आरचितं प्रियं—गजवञ्चनलक्षणं येन सः ॥

इति गजाग्रेसरवर्णनम् ॥ १०२ ॥*

*दोलविवर—जिनसमवसरण—रत्नत्रय—यति ६ व्याख्यानपत्राणि त्रुटितानि ॥

अथ वाग्भटवर्णनम्—

श्रीमद्वाग्भटमन्त्रिणा सह साम्यमालम्बतेऽयं विहारः । कीदृशः ? गम्भीरः, काभिः ? 'श्रुतिभिः' वेदोक्तिभिः, यद्वा सिद्धान्तश्रवणैः, यद्वा श्रुतधरैः । सन्—शोभनं रिपावपि अचिन्तितोपकारकरणं तया यद् आचरणं—आचारः तस्मात् 'प्राप्तप्रतिष्ठः' सकलजगति लब्धख्यातिः। 'दयः' वस्त्रान्नपानशयनासनौषधपुस्तकादिवितरणेन मुनीनामुपष्टम्भकर्त्ता । 'सत्कान्तारचितप्रियः' सन्तु कान्त आरचितप्रियश्च 'बहुगुणः' दया-दाक्षिण्य-गाम्भीर्यौदार्य—स्थैर्यादिगुणरत्नरोहणगिरिः ॥

इति वाग्भटवर्णनम् ॥ १०९ ॥

अथ जैनसिद्धान्तवर्णनम्—

तथा श्रीमतां तीर्थकराणां वाक्—सिद्धान्तलक्षणा तया सह साम्यमालम्बतेऽयं विहारः । कीदृशी तीर्थकरवाक् ? 'गम्भीरा' अनेकार्थत्वादलब्धमध्या, काभिः ? 'श्रुतिभिः'

'मूयं हुंकारं वा वाढक्कार पडिपुच्छ वीमंसा ।
तत्तो पसंगपारायणं च परिनिट्ठ सत्तमए ॥ ( आ.नि.गा.२३)

इतिरूपाभिः सप्तभिः श्रुतिभिः । 'सदा'। सर्वदा 'चरणतः' चारित्रात् प्राप्तप्रतिष्ठा उदयश्च परतीर्थिकेषु यया सा । सत्—शोभनं अजरामरत्वेन अव्याबाधकं—सुखं अन्ते—पर्यन्ते यया सा सत्कान्ता । अत एव रचितप्रिया । तथा 'बहुगुणा' बहवः प्रशमजननादयो गुणा यस्याः सा ॥

इति जैनसिद्धान्तवर्णनम् ॥ ११० ॥

---

१ छाया—मूकं१ हुंकारं२ वा वाढकारं३ प्रतिपृच्छा४ विमर्शः५। ततः प्रसङ्गपारगमनं६ च परिनिष्ठा७ सप्तमे ॥

## अथ सिद्धगतिवर्णनम्—

तथा श्रीमती—सकलकर्मक्षयेण अविनश्वरी याऽसौ श्रीः तद्वतां मुक्तिपथप्रस्थितानां मुनीनां वा—गमनं 'वा गतिगन्धनयोः' इति धातोः भावक्विबन्तस्य प्रयोगः, तया सह साम्यमालम्ब्यतेऽयं विहारः । कीदृशी कर्मक्षयभाजां मुनीनां गतिः ? 'गम्भीरा' गमं—गमनं प्रस्तावाद् निर्वाणं प्रतीतं कुर्वन्ति तमाचक्षते वा इति 'णिज् बहुलं नाम्नः कृगादिषु' ( सिद्ध० ३।४।४२ ) इति णिच् 'क्विप्' ( सिद्ध० ५।१।१४८ ) इति क्विप् तयोर्लोपे गमः—तपोधनाः तेषां भियं—संसाराद् भयं ईरयति या सा गम्भीरा । सा च कथमवाप्यते ? 'श्रुतिभिः' सिद्धान्तश्रवणैः । 'सदा' सर्वदा 'चरणतः' चारित्रात् प्राप्ता प्रतिष्ठा उदयः—ऊर्ध्वगमनं च यया सा ।सतां—शिष्टानां रतिजननेन कान्तेव कान्ता सत्कान्ता । 'रचितप्रिया' रचिताः—कल्पिताः प्रियाः—वल्लभा यया सा, बहूनां सिद्धानां प्रियतमाश्रयणात् । तथा 'बहुगुणा' प्रचुरज्ञानदर्शनादिगुणा ॥

इति सिद्धगतिवर्णनम् ॥ १११ ॥

## अथ वेश्यासक्तवर्णनम्—

तथा श्रियं मथ्नाति यः स श्रीमत्—वेश्यासक्तः विटः तेन सह साम्यमालम्ब्यतेऽयं विहारः । कीदृशः वेश्यासक्तः ? 'गम्भीरः' समधिकं धनं तव दास्यामीति वेश्यायाः पुरतः शपथकरणैः बहुप्रतिपादनैश्च अलब्धमध्यः। 'श्रुतिभिः' गीतश्रवणैः । सह दा—दानेन वर्तते यदाचरणं—ताम्बूलदानादिव्यापारः तेन प्राप्ता प्रतिष्ठा—वेश्यासद्मनि अवस्थानं

उदयश्च—वेश्यायाः सकाशाद् विभवो येन सः । सती—शोभना याऽसौ कान्ता—पण्यस्त्री तया रचितं प्रियं—सुरतकान्तादिकं यस्य सः ॥

इति वेश्यासक्तवर्णनम् ॥ ११२ ॥*

अथ ऋषभदेववर्णनम्—

तथा 'परिवादिन्या' इति पदे आदिन्या इति विशेष्यम् । आदौ—युगादौ नयति—शिक्षयति शिल्पकलादिकमिति आदिनीः—ऋषभदेवः तेन सह साम्यमालम्बतेऽयं विहारः । कीदृशो युगादिदेवः ? गम्भीरः, 'श्रुतिभिः' श्रुतधरैः । सत्—शोभनं यत् आचरणं—व्रतग्रहणानन्तरं वर्षं यावन्निरशनविहारलक्षणम् वर्षसहस्रं यावद् मौनकरणलक्षणं च तस्मात् सदाचरणतः—प्राप्तप्रतिष्ठः लब्धमाहात्म्य उदयः—केवलज्ञानावाप्तिसमनन्तरं समवसरण [ समागत ] चतुर्विधदेवनिकायेभ्यः पूजालक्षणो निर्वाणलक्षणो वा यस्य सः । सतां—मिथुनजनराणां—युगलिकानां कान्तानां—तत्प्रेयसीनां रचितप्रियः—निर्मितधर्माधर्मव्यवस्थः। 'बहुगुणः' ज्ञानदर्शनादिगुणोपेतः । इति ऋषभदेववर्णनम् ॥ ११५ ॥

अथ भरतचक्रवर्त्तिवर्णनम्—

तथा नरेश्वरेण—चक्रवर्त्तिना सह साम्यमालम्बतेऽयं विहारः। कीदृशश्चक्रवर्ती ? 'गम्' गमं—भरतक्षेत्रषट्खण्डेषु चङ्क्रमणं करोति तमाचष्टे वा, लोकानां प्रथमं भरतचक्रवर्त्तिना तस्य तथोपदिष्टत्वात्,

* जिनेश्वरविहारवर्णनम् ॥११३ जिनस्तुतिकर्तृवर्णनम् ११४ त्रुटितम् ।

णिच्, क्विप्, तल्लोपे च गम्—गमनकर्ता इत्यर्थः। 'भीरः' परचक्रस्य भयप्रदः। सत्कान्ताः—चतुःषष्टिसहस्रसङ्ख्याः तासां रतिसुखाय रात्रौ रात्रौ रचिताः—निर्मिताः प्रियाः—स्वरूपसदृशरूपा येन सः। 'बहुगुणः' बहुरूपधारी इत्यर्थः॥

इति भरतचक्रवर्तिवर्णनम् ॥ ११६ ॥

शेषाणि व्याख्यानानि गतानि।

**एवं षोडशोत्तरशतं व्याख्यानानाम्॥**

तथाहि—

प्रणतनृपेतरनरपति—विधि—पुरुषोत्तम—हरदैत्य—धनेशाः।
धर्नद—क्षेत्राधीशो—श्रीमदरजिनौः कृतयुगं च ॥ १ ॥

चक्रि—स्मरनन्दन—वागुरिकाः पल्लीपति—श्वकोराश्च।
अहिपति—सुरपति—पावक—कृतान्त—रक्षो—वरुणदेवाः ॥ २ ॥

पवनः कमठः पाताल—मर्त्य—सुरलोककीर्तनं चाऽत्र।
धनुर्धर—सज्जन—दुर्जन—भूपतिकुमार[पाल]नृपाः ॥ ३ ॥

हंस—बुध—मूर्ख—लक्ष्मी—सुवर्ण—शशिनस्तथैव कर्पूरः।
स्वः—सूर्य—हेमचन्द्रप्रभु—मङ्गल—शशिसुताश्चैव ॥ ४ ॥

सुरगुरु—शुक्र—शनैश्चर—राहु—शिखीशानमस्तकशशाङ्काः।
हरहास—शम्भुभस्मोद्धूलन—दानव—नर—श्रीह्रीः ॥ ५ ॥

हेममयचन्द्र—याचक—निष्कामशुभाश्च पुरुषार्थाः।
मोक्ष—श्री वाग्देवी—वीणी—श्रीमद्वचन—सुभटाः ॥ ६ ॥

मैन्त्री पथिको भक्षणशीला सर्पप्रियाऽथ दुःशीला ।
विदुषी सुभगो वात्स्यायन—मौक्तिक—शम्भुमूर्द्धानः ॥ ७ ॥

गौरीस्तनतट—शशधरकिरणा चित्तं स्तथोल्कोऽत्र ।
वदनं क्षेत्राधीश्वर—सर्पेक्षण—काम—कामिन्यः ॥ ८ ॥

सामन्त—पिशिताहारिजन—दयालु—चर—रत्नलक्षणविदग्धाः ।
प्राङ्गण—मङ्गलशोभा—निधिकलशाम्बुचर—देवाचाः ॥ ९ ॥

वणिगथ देवाधिपतिप्रतिमा—जिनभक्त—जैनमतवादाः ।
पौरुष—विनायक—गज—गजाग्रसर—शैलविवराणि ॥१०॥

जिनसमवसरण[१०४]—रत्नत्रय[१०७]—यति[१०८]—वाग्भटसुमन्त्रिणः[१०९] समयः[११०] ।
सिद्धिगति[१११]—पण्यनारीसक्त[११२]—जिनेश्वरविहारश्च[११३] ॥११॥

जिननुतिकृत्[११४]—प्रथमार्हद्[११५]—भरतेश्वरचक्रि[११६]—चरमजिननाथाः[११७] ।
उपमानानि श्रीमत्पार्श्वस्तवशतकवृत्तेऽत्र ॥१२॥

शुभं भवतु श्रीश्रमणसङ्घस्य ॥



[ २ ]

## पञ्चार्थकाव्यम् ।

यो गङ्गां दधदस्ति योऽत्र हरिणाऽऽधारेण विश्रूयते
यो नागेन विराजते कलिमलं योऽसौ निहन्तुं क्षमः ।
यस्येयं वरवारवृत्तिरमला यस्मात् प्रभूतं शिवं
स ब्रह्मा मुरजिन्मृडो दिनकरश्चन्द्रोऽस्तु सौख्याय वः ॥

ब्रह्मपक्षे—

यो 'गङ्गां' वाणीं दधदस्ति ।यो 'हरिणा' विष्णुना आधारेण['विश्रूयते'] विज्ञायते,विष्णुनाभिसम्भवत्वात् ।नगस्यापत्यं नागं—स्वर्णम् ,'नागेन' हेम्ना विराजते, हिरण्यगर्भत्वात् ।योऽसौ प्राणिनि विषये 'कलिमलं' पापं निहन्तुं क्षमः, ब्रह्मज्ञानित्वात् । 'यस्य' ब्रह्मण इयं वरा वारवृत्तिः-वारीणां—पानीयानां समूहो वारं तत्र वृत्तिः वारवृत्तिः । कथम्भूता ? 'अमला' निर्मला, अप्सुर्वीर्यनिक्षेपणात् । यस्मात् 'प्रभूतं' सञ्जातं 'शिवं' कल्याणम्, सूर्याचन्द्रमसोस्तस्य लोचनत्वात् ॥ १ ॥

विष्णुपक्षे—

यः 'अगं' गोवर्द्धनाख्यं पर्वतं 'गां' पृथ्वीं धेनुवृन्दं वा दधदस्ति । 'हरिणा' गरुडेन श्यामवर्णेन वा आधारभूतेन 'विश्रूयते' परिज्ञायते, गरुडवाहनत्वात् कृष्णवर्णत्वाच्च तस्य । यो 'नागेन' शेषेण विराजते, शेषशायित्वात् । यो 'असौ' खड्गे 'अलम्' अत्यर्थं 'कलिं' कालं निहन्तुं 'क्षमः' समर्थः, कल्किरूपेण म्लेच्छजातित्वात् । यस्येयमित्यादि प्राग्वत् ॥ २ ॥

हरपक्षे—

यो गङ्गां दधदस्ति । 'हरिणा' चन्द्रमसा आधारेण ज्ञायते, चन्द्रचूडत्वात् । 'नागेन' सर्पेण विराजते, सर्पाभरणत्वात् । योऽसौ

कल्मषं निहन्तुं क्षमः। यस्येयं वराणां—प्रसादानां समूहो वारं तत्र वृत्तिः। कथम्भूता ? अमला, वरदायित्वात्। यस्मात् शिवं—शिवपदं प्रभूतम्॥

सूर्यपक्षे—

यो न गच्छतीत्यगः तं अगं—पङ्गुं अरुणं 'गां' द्युतिं च दधदस्ति। यो 'हरिणा' तुरङ्गमेण विश्रूयते, सप्तसप्तिरिति प्रसिद्धत्वात्। यो 'अगे' उदयाचले न न विराजते अपि तु विराजते। योऽसौ 'अलं' अत्यर्थम् ['कलिम्'] अन्धकारं निहन्तुं क्षमः। यस्येयं वरा—प्रधाना वारवृत्तिः अमला, रविवार इति प्रसिद्धया। यस्मात् शिवं 'प्रभूतं' उद्भूतम्॥४॥

चन्द्रपक्षे—

अगं गच्छतीत्यगङ्गा तां वन्ध्यमानिनीं दधदस्ति। हरिण एवा-धारस्तेन विश्रूयते, मृगाङ्कत्वात्। यो 'नागेन विराजते' ऐरावणेन सह शोभते, धवलत्वात्। वारेर्भावो वारं तत्र वृत्तिः—तद्रूपता वरा—प्रधाना वारवृत्तिः। कथम्भूता ? अमला, अमृतमयत्वात्। अथवा वरः—पतिः तस्य वारवृत्तिः—स्त्रीषु समानसमयपरिपालनवृत्तिः, तारासु प्रत्येक-दिनस्थितित्वात्। यस्मात् प्रभूतं 'शिवं' सुखम्, सौम्यग्रहत्वादिति॥५॥

पार्श्वजिनपक्षे—

'योगं' मनोवाक्कायाशुभव्यापारनिरोधलक्षणं 'गां' पञ्चत्रिंशद्गुण-विभूषितां योजनगामिनीं वाणीं च दधदस्ति। यः 'हरिणा' इन्द्रेण उपलक्षणत्वाद् धरणेन्द्रेण विश्रूयते। यो 'नागेन' सर्पेण विराजते, अहिलाञ्छनत्वात् तस्य। यः 'कलिमलं' पापं निहन्तुं क्षमः भव्या-ङ्गिनामिति शेषः। यस्य इयं वरा—प्रधाना वारवृत्तिः—वारीणां—पानीयानां समूहो वारं तस्य वृत्तिः—परितो वेष्टनम्, मेघमालिकृत-घोरजलोपसर्गसहनकारित्वात्। यस्मात् 'शिवं' मोक्षं 'प्रभूतं' प्रवृत्तम्॥ ६॥ अनुक्तोऽयमर्थः।

# अनुलोमप्रतिलोमश्लोकः।

हंसनादमतं देवं देवानां विभयं भयम् ।
यं भयं भविनां वादे वन्दे तं मदनासहम् ॥

तं 'देवानां देवं' वीतरागं हरं वा वन्दे । किम्भूतम् ? हंसस्येव नादः—शब्दस्तेन सुस्वरत्वात् मतं—लोकानां सम्मतं वीतरागम् । महेश्वरपक्षे तु हंसनादः—प्रसिद्धिर्यस्य, हंसवाहनत्वाद् ब्रह्मा उच्यते, तस्य मतं—पूज्यम्, ब्रह्मणः पूज्यत्वादीश्वरस्य । शेषाणि सर्वाण्यपि विशेषणानि पक्षद्वयेऽपि तुल्यानि । 'विभयम्' विगतभयम् । पुनः किम्भूतम् ?'भयम्' सेव्यम्, धातूनामनेकार्थत्वात् । केषाम्? भविनाम्। क्व ? 'वादे' विवादे । किमित्येतौ वादे सेव्येते? यतो 'भयम्' भानि—नक्षत्राणि यातयतीति भयः—चन्द्रः तद्वद् आह्लादकत्वात् । पुनः किम्भूतम् ? मदनासहम्, उभयोरपि कामविनाशकत्वात् ॥

इत्यनुलोमप्रतिलोमश्लोकार्थः ॥

[ ४ ]

श्रीसोमप्रभसूरिप्रणीतं

स्वोपज्ञवृत्तिविभूषितं

# शतार्थकाव्यम् ।

—*—

यद्भारती कामगवीव पुंसां विचित्रमर्थं हृदयानुरूपम् ।
धर्मोपदेशावसरे प्रसूते स वः शिवं तीर्थकरः करोतु ॥ १ ॥
लसन्ति यस्याः स्मरणेन सूक्तयः पयोदपङ्क्तेः पयसा लता इव ।
मतिप्रबोधात् कृपयाऽनुगृह्णती जगन्ति सा वः श्रुतदेवताऽवतात् ॥
प्रभुर्बभूवाऽजितदेवसूरिः सच्चन्द्रगच्छाम्बरपूर्णचन्द्रः ।
जिनेन्द्रधर्माम्बुनिधिः प्रपेदे धनोदकैः स्फूर्तिमतीव यस्मात् ॥३॥

जयति विजयसिंहः सूरिरुद्दामकाम—
द्विरदविजयसिंहस्तस्य पादाब्जहंसः ।
चरणकरणनिष्ठां यस्य संवीक्ष्य लोकः
कुवलयदलमृद्वीं वेत्ति धौतासिधाराम् ॥४॥

तस्यांह्रिपङ्केरुहचञ्चरीकः सोमप्रभाचार्य इति प्रसिद्धः ।
परावबोधाय परार्थवृत्तः शतार्थवृत्तस्य तनोति वृत्तिम् ॥५॥

तच्चेदम्—

कल्याणसारसवितानहरेक्षमोह
कान्तारवारणसमान जयाद्यदेव ।
धर्मार्थकामद महोदय वीर धीर
सोमप्रभाव परमागम सिद्धसूरे ॥ १ ॥

अत्र स्तुताश्चतुर्विंशतिर्जिना[२४] :A सिद्ध[२५]–सूर्यु[२६]–पाध्यायाः[२७] ।
मुनि[२८]–पुण्डरीक[२९]–गौतम[३०]–सुधर्म[३१]– पञ्चव्रती[३६]–Bसमयाः[३७] ॥ १ ॥
श्रुतदेवी[३८] पुरुषार्थाः[४२]C विधि[४३] -नारद[४४]–वेद[४५]–विष्णु[४६]–बलदेवाः[४७] ।
श्रीः[४८] प्रद्युम्न[४९]श्चर्क[५०] शङ्खः[५१] शिव[५२]–गिरिसुता[५३]–स्कन्दाः[५४] ॥ २ ॥
हेरम्बः[५५] कैलासो[५६] ग्रह[६५]D–दिक्पालाः[७३]E जयन्त[७४]–धन[७५]–मदिराः[७६] ।
कनका[७७]-ऽब्धि[७८]-सिंह[७९]-हय[८०]-करि[८१]-सरोज[८२]-भुजगाः[८३] शुको[८४]ऽरण्यम्[८५] ॥ ३ ॥
मानससरो[८६] ऽश्ववैद्यो[८७] ऽनिलसुत[८८]–पत्नी[८९]–महागुरुचतुष्कम्[९३] ।F
जयसिंह[९४]–कुमारनृपा[९५]–ऽजयदेवा[९६] मूलराजश्च[९७] ॥ ४ ॥
श्रीसिद्धपालकवि[९८]–रजितदेव[९९]–गुरुर्विजयसिंहः[१००] ।
तच्छिष्यः सोमप्रभसूरि[१०१]श्च शतार्थवृत्तकविः ॥ ५ ॥

तत्र शक्रचक्रविरचितचरणसेवः श्रीयुगादिदेवः—

'हे आद्यदेव !' अस्यामवसर्पिण्यां प्रथमतीर्थंकर !'जय' सर्वोत्क-

---

A ऋषभ १ अजित २ सम्भव ३ अभिनन्दन ४ सुमति ५ पद्मप्रभ ६ सुपार्श्व ७ चन्द्रप्रभ ८ सुविधि ९ शीतल १० श्रेयांस ११ वासुपूज्य १२ विमल १३ अनन्त १४ धर्म १५ शान्ति १६ कुन्थु १७ अर १८ मल्लि १९ मुनिसुव्रत २० नमि २१ नेमि २२ पार्श्व २३ महावीरस्वामिनामानः । B अहिंसासूनृतास्तेयब्रह्माऽपरिग्रहाभिधाना । C धर्मार्थकाममोक्षाख्याः । D सूर्य–चन्द्र–मङ्गल-बुध–गुरु–शुक्र-शनैश्चर–राहु–केतवः । E इन्द्र–अग्नि–यम–नैर्ऋत–वरुण–वायु–कुबेर–ईशानाः । F श्रीसिद्धसेनदिवाकर–श्रीहरिभद्राचार्य–श्रीवादिदेवसूरि–श्रीहेमचन्द्राचार्याः ॥

र्षेण वर्त्तस्व । 'कल्याणसारसवितानहरे !' "कल्याणं हेम्नि मङ्गले॥" (हैम्यने० ३–१८६ ) इति पाठात् कल्याणानि–मङ्गलानि तान्येव सारसानि–कमलानि "सारसं सरसीरुहे । सारसः पुष्कराख्येन्द्वोः" (हैम्यने० ३–७५४) इति पाठात्, तेषां वितानं–विस्तारः "वितानं कदके यज्ञे विस्तारे क्रतुकर्मणि । तुच्छे मन्दे वृत्तभेदे शून्यावसरयोरपि ! ॥" (हैम्यने० ३–४०६)इति पाठात्, तदुन्मीलने हरे!–सूर्य ! "अथ हरिर्दिवाकरसमीरयोः ॥ यमवासवसिंहांशुशशाङ्ककपिवाजिषु । पिङ्गवर्णे हरिद्वर्णे भेकोपेन्द्रशुकाहिषु॥"(हैम्यने० २-४५९-४६०)इति पाठात् । 'अक्षमोहकान्तारवारणसमान ! ' "अक्षो रथस्यावयवे व्यवहारे बिभीतके । प्रासके शकटे कर्षे ज्ञाने चात्मनि रावणौ ॥ अक्षं सौवर्चले तुत्थे हृषीके स्यात्" ( हैम्यने० २–५४३–५४४ ) इति पाठात् अक्षाणि–इन्द्रियाणि अक्षो–ज्ञानं आत्मा व्यवहारो वा तद्विषये मोहो–भ्रान्तिः स एव कान्तारं–काननम् "कान्तारं दुर्गवर्त्मनि । महारण्योपसर्गाद्योः काननेक्षुविशेषयोः॥" ( हैम्यने० ३–५२९) इति पाठात्, तस्योद्भञ्जने वारणसमान !–करितुल्य ! । 'धर्मार्थकामद !' 'धर्मो यमोपमापुण्यस्वभावाचारधन्वसु । सत्सङ्गेऽर्हत्यहिंसादौ न्यायोपनिषदोरपि ॥ धर्मं दानादिके " (हैम्यने० २–३१९–३२०) इति पाठात् धर्मः–पुण्यं साधुश्रावकयोराचारो वा, " अर्थो हेतौ प्रयोजने निवृत्तौ विषये वाच्ये प्रकारद्रव्यवस्तुषु॥" (हैम्यने० २–२०८–९ ) इति पाठात् अर्थो–विभवः, "कामः स्मरेच्छाकाम्येषु" ( हैम्यने० २–३११) इति पाठात् कामाः–काम्यपदार्थाः तान् ददाति । 'महोदय ! ' महान् उदयः–उन्नतिर्यस्य, पञ्चधनुःशत-

प्रमाणदेहत्वात् । 'वीर ! ' सकलकर्मारातिविजयविक्रान्त ! । 'धीर !' क्षुत्पिपासादिपरीषहसहिष्णो!, वर्षावधि निरशनः प्रभुर्विहृत इत्यागमात्। 'सोमप्रभाव !' "सोमस्त्वौषधितद्रसेन्दुषु ॥ दिव्यौषध्यां घनसारे समीरे पितृदैवते । वसुप्रभेदे सलिले वानरे किन्नरेश्वरे ॥" (हैम्य० २-३३३ -३३४ ) इति पाठात् सोमः—चन्द्रः तस्य इव प्रभावः—स्फूर्त्तिर्यस्य, आह्लादक इत्यर्थः । 'परमागम ! ' परमः—सर्वसर्वक्रपाप्रधानत्वेन प्रकृष्ट आगमः—" अत्थं भासइ अरहा " ( आ. नि. गा. ९० ) इति वचनात् अर्थरूपः सिद्धान्तो यस्मात् । 'सिद्धसूरे !' सिद्धाः— निर्वृताः सूरयः—पुण्डरीकाद्या गणधरा यस्मात् ॥ १ ॥

**अथ नमदमरराजिविराजितः श्रीअजितः—**

'हे जयाद्य ! ' जयः—जयवादः आद्यः—सर्वत्र प्रथमो यस्य सः, अर्थात् अजितः। यद्वा "ते लुग् वा" (सिद्धहे० ३–२–१०८) इति विशब्दलोपे जयाशब्देन विजया उच्यते । यद्वा जयाशब्देनैव विजया, "जयोमा तत्सखी तिथिः।" (हैम्य० २–३५२) इति पाठात् तिस्रोऽपि जयाशब्देनैवोच्यन्ते, तथा " विजयोमातत्सख्योस्तिथावपि " (हैम्य०३–४९७)इति पाठात् तिस्रोऽपि विजयाशब्देनोच्यन्ते, एवमत्रापि जयाशब्देनैव प्रभोर्जननी विजया, सा आद्या—मातृत्वेन प्रथमा यस्य । 'कल्याणसारसवितानहरे !' कल्याणसारसं—स्वर्णपद्मं तस्य वितानो—विस्तारः तद्वत् हरिः—कपिशा कान्तिर्यस्य । 'क्षमोह !' क्षमां—क्षान्तिं ऊहते । ' कान्तार ! ' कान्तः—कमनीयः आरः— चङ्क्रमणं यस्य । ' वारणसमान ! ' वारणो—लाञ्छनगजः तेन समान !—सपूज !, लाञ्छनगजदर्शनाद् अजित इति ज्ञात्वा

पूज्यते इत्यर्थः। 'देव !' देवाधिदेव!। 'धर्मार्थ !' धर्महेतो !।'कामद !' स्मरखण्डक !। 'महोदयवीरधीर !' महोदयो—मोक्षः तत्र वीरः—विशेषेण अपुनरावृत्त्या ईरो—गमनं तत्र रागद्वेषमलिम्लुचादिनिवृत्ति-सम्पादनेन धीर!—प्रगल्भ!। 'सोमप्रभ !' आह्लादक!। 'अव' रक्ष। 'परम्' आत्मव्यतिरिक्तम्। 'आगमसिद्धसूरे !' आगमेन—सिद्धान्तेन सिद्धाः—ख्याता निर्वृता वा सूरयो—गणधरा यस्य ॥२॥

**अथ चरणस्मरणप्रभावभग्नभवसम्भवः श्रीसम्भवः—**

'हे सवितानहरे !' सवितानो—विस्तारशाली हरिः—लाञ्छनाश्वो यस्य इति, अनेन सम्भवो लभ्यते, यथा वृषाङ्को हरः। 'कल्याणसार !' भद्रश्रेष्ठ !। 'क्षमोहकान्तारवाः' क्षमा—क्षान्तिस्तस्या ऊहो—वितर्कः स एव कान्तारं—काननं तत्र वाः—सलिलः (लम्)। 'रणसमान !' रणो—युद्धं तत् स्यति—खण्डयति रणसं मानं—ज्ञानं यस्य। जय त्वम्। 'आद्यदेव !' देवाधिदेव!। 'धर्मार्थकामद !' त्रिवर्गप्रद!। 'महोदयवीरधीर !' मोक्षगतिप्रगल्भ!। 'सोमप्रभाव !' आह्लादक!। 'परमागम !'प्रकृष्टसिद्धान्त!। 'सिद्धसूरे !' सिद्धाः सूरयो यस्मात्॥३॥

**अथ समस्तत्रिभुवनाभिनन्दनः श्रीअभिनन्दनः—**

हे 'सवितानहरे !' सवितानो—विस्तारवान् हरिः—लाञ्छनवानरो यस्य इति, अनेन अभिनन्दनो लक्ष्यते। 'कल्याणसार !' भद्रश्रेष्ठ ! 'अक्षमोहकान्तारवारणसमान !' करणाज्ञानवनगजसमान ! जय त्वम्। 'आद्यदेव !' देवाधिदेव ! 'धर्मार्थकामद !' त्रिवर्गप्रद ! 'महोदय-

वीरधीर !' मोक्षगतिप्रगल्भ ! 'सोमप्रभाव !' परमाह्लादक ! 'परमागम !' प्रकृष्टसिद्धान्त ! 'सिद्धसूरे !' सिद्धाः सूरयो यस्मात्॥३॥

अथ दुर्गदौर्गत्यगर्त्तप्रपतज्जन्तुजातोद्धरणप्रवणमतिः श्रीसुमतिः-

हे 'धीर !' धिया-मत्या शोमनत्वाद् राजते धीर इति, अनेन सुमतिर्लक्ष्यते । 'कल्याणसार !' भद्रश्रेष्ठ ! । 'सवितान !' विः-क्राञ्चनक्रौञ्चपक्षी तस्य तानो-विस्तारः तेन सह वर्त्तते, यथा 'विविगोगतयः ब्रह्मविष्णुमहेश्वराः' ( ) इत्यत्र विशब्दौ पक्षिसामान्यवाचकावपि हंसे गरुडे च विशेषेण वर्त्तते तथाऽत्रापि विशब्दः क्रौञ्चे । 'हर' अपनय । कम् ? 'परं' भावशत्रुम् । 'ईक्ष !' सकललोकालोकवीक्षक ! । 'मोहकान्तारवारण !' मोहारण्यगज ! । 'समानजय !' मानजययुक्त ! । 'आद्यदेव !' देवाधिदेव ! । 'धर्मार्थकामद !' धर्मार्थकामान् ददाति । 'महोदयवीर !' महोदयो-मोक्षस्तं ईर्त्ते-गच्छति । 'सोमप्रभाव !' आह्लादक ! । 'आगमसिद्धसूरे !' आगमेन सिद्धाः सूरयो यस्य ॥ ५ ॥

अथ निजकायकान्तिजितपद्मरागप्रभः श्रीपद्मप्रभः —

'हे कल्याणसारसवितान !' कल्याणः-श्रेष्ठः सारसस्य-क्राञ्चनपक्षस्य वितानः-विस्तारो यस्येति, अनेन पद्मप्रभो लक्ष्यते । 'हर' अपनय 'परम्' भावशत्रुम् ! । 'ईक्ष !' सकलजगद्भाववीक्षक ! 'मोहकान्तारवारण !' अज्ञानवनगज ! 'समानजय !' मानजययुक्त ! 'आद्यदेव !' देवाधिदेव ! 'धर्मार्थकामद !' त्रिवर्गप्रद ! 'महोदय-

वीरधीर !' मोक्षगतिप्रगल्भ ! 'सोमप्रभाव !' आह्लादक ! आगमसिद्धसूरे ! ॥ ६ ॥

अथ जघन्यतोऽपि त्रिदशकोटिपर्युपासितपार्श्वः श्रीसुपार्श्वः—

'कल्याणसार !' कल्याणशब्दः सामान्यमङ्गलवाचकोऽपि प्रस्तावात् मङ्गलविशेषं स्वस्तिकमिह, मङ्गलाष्टकमध्ये पठितत्वात्, तेन लाञ्छनस्थेन सारः–श्रेष्ठः, सुपार्श्व इत्यर्थः। 'सवितानहरे !' सवितानः–फणपञ्चकविस्तारवान् हरिः–सर्पो यस्य। 'अक्षमोहकान्तारवारणसमान !' करणमोहवनकरिसम ! जय त्वम्। 'आद्यदेव !'[देवाधिदेव !।] धर्मार्थकामान् ददातीति 'धर्मार्थकामद !'। 'महोदयवीरधीर !' मोहदयो–मोक्षस्तत्र वीरो–विशेषेण गमनं तत्र धीर !। 'सोमप्रभाव !' आह्लादक !। प्रकृष्टसिद्धान्त !। सिद्धाः सूरयो यस्मात् ॥ ७ ॥

अथ सकललोकलोचनचकोरचन्द्रप्रभः श्रीचन्द्रप्रभः—

हे 'सोमप्रभ !' चन्द्रप्रभ ! 'अव' रक्ष। 'परम्' अन्यलोकम्। 'कल्याणसार!' भद्रश्रेष्ठ ! 'सवितानहरे !' सवितानो–विस्तारवान् हरिः–लाञ्छनचन्द्रो यस्य। अक्षमोहकान्तारवारण !' करणमोहवनगज ! 'समानजय !' मानजययुक्त ! 'आद्यदेव !' देवाधिदेव ! 'धर्मार्थकामद !' धर्मार्थकामान् ददाति 'महोदयवीरधीर !' मोक्षगमनदक्ष ! 'आगमसिद्धसूरे !' आगमेन सिद्धाः सूरयो यस्य ॥८॥

अथ सकलसुरपतिरचितचरणपरिचर्याविधिः श्रीसुविधिः—

हे 'कल्याणसारस!' सकलकल्याणश्रेष्ठ !, 'सारसं सरसीरुहे।' (हैम्य. ३–७५४) प्रस्तावात् मकरो लाञ्छनस्थो यस्य। 'सोमप्रभ !'

चन्द्रद्युते ! । आभ्यां पदाभ्यां सुविधिर्लक्ष्यते । 'अव' रक्ष । कम् ? 'परम्' भक्तितत्परं जनम् । ' वितानहर ! ' वितानं—यज्ञः तस्य हरः—निषेधकः वितानहरः—पशुवधप्रधानयज्ञनिषेधक ! इत्यर्थः । ' ईक्ष! ' परमार्थतोऽर्थालोकनं यस्य । ' मोहकान्तारवारण ! ' अज्ञानवनगज ! 'समानजय !' मदजययुक्त ! 'आवदेव !' देवाधिदेव ! 'धर्मार्थकामद !' धर्मार्थकामान् ददाति । 'महोदयवीरधीर !' मोक्षगतिदक्ष ! 'आगमसिद्धसूरे !' आगमेन सिद्धाः सूरयो यस्य ॥९॥

## अथ त्रिदशसरिदूर्मिनिर्मलचरित्रपवित्रितधरित्रीतलः श्रीशीतलः—

हे 'सोमप्रभाव !' सोमः—शीतांशुः तस्येव प्रभावः—स्वभावो यस्य इति,अनेन श्रीशीतलो लक्ष्यते, यथाऽग्निस्वभावो दाहकः। कल्याणसार !' कल्याणं—लाञ्छनरूपं श्रीवत्सलक्षणं मङ्गलं तेन सार ! ।'सवितानहर !' सवो—यज्ञः स विद्यते येषां ते सविनः तेषां तानः—पशुवधादिविस्तारः तं हरति । 'ईक्ष !' यथावस्थितवस्तुवीक्षक ! । 'मोहकान्तारवारणसमान !' मोहवनगजसम ! जय त्वम् । 'आवदेव !' देवाधिदेव ! 'धर्मार्थकामद !' धर्मार्थकामान् ददाति 'महोदयवीरधीर !' मोक्षगतिदक्ष ! 'परमागम !' प्रकृष्टसिद्धान्त ! 'सिद्धसूरे !' सिद्धाः सूरयो यस्मात् ॥ १० ॥

## अथ स्मरणमात्रसमुल्लसितश्रेयान् श्रीश्रेयान्—

हे 'कल्याण !' हे श्रेयान् ! श्रेयांस इत्यर्थः, " ऋषभो वृषभः श्रेयान् श्रेयांसः स्यात् "(अभि.१–२९) इति पाठात्। 'सारसवितान-

हरे !' सारेण—धनेन बलेन वा सवितानः—सविस्तारो हरिर्यस्मात्, पङ्क्तिरथन्यायेन हरिशब्देन श्रेयांसपिता विष्णुरुच्यते। 'अक्षमोहकान्तारवारणसमान !' करणमोहवनगजसम ! जय त्वम्। 'आद्यदेव !' देवाधिदेव !। धर्मार्थकामान् दत्ते। 'महोदयवीरधीर !' मोक्षगमनदक्ष ! सोमप्रभाव ! आह्लादक ! 'परमागम !' शुभसिद्धान्त ! 'सिद्धसूरे !' सिद्धाः सूरयो यस्मात् ॥ ११ ॥

**अथ परमैश्वर्यनिवासवासवपूज्यः श्रीवासुपूज्यः—**

हे 'जयाद्य !' वासुपूज्य !' जया—वसुपूज्यमहाराजदेवी सा आद्या—जननीत्वेन प्रथमा यस्य। ' देव !' देवाधिदेव !। 'कल्याणसारसवितान !' चङ्क्रमणकाले कल्याणसारसानां—कनककमलानां वितानो—विस्तारो यस्य। 'हर' अपनय। कम् ? 'परम्' भावशत्रुम्। 'ईक्ष !' जगदीक्षक ! मोहवनगजसम ! धर्मार्थकामद ! मोक्षगमनदक्ष ! [ श्लो. १०० ] ' सोमप्रभाव !' आह्लादक ! आगमसिद्धसूरे !' आगमेन सिद्धाः सूरयो यस्मात् ॥ १२ ॥

**अथ प्रणतशतमखचक्रचूडामणिमरीचिरोचिष्णुचरणकमलः श्रीविमलः—**

हे 'कान्त !' विमलस्यैव कान्तत्वात्, अथवा कं—पानीयं तस्येवान्तं—स्वरूपं यस्य, यदुक्तम्—"अन्तः स्वरूपे निकटे प्रान्ते निश्चयनाशयोः। अवयवेऽपि" ( हैम्यने० २-१५५ ) अतः कान्तशब्देन विमल उच्यते, तस्य विमलत्वात्। 'कल्याणसारसवितानहरे! कनककमलविस्तारवत् कपिशकान्ते !। ' क्षमोह !' क्षमां—क्षान्तिं ऊहते।

'आरवारणसमान !' अन्तरारिसमूहनिषेधसाहङ्कार ! जय त्वम् । 'आद्य-देव !' देवाधिदेव ! धर्मार्थकामद ! 'महोदयवीरधीर !' मोक्षगमनदक्ष ! आह्लादक ! 'परमागम !' शुभागम ! ! 'सिद्धसूरे !' सिद्धाः सूरयो यस्मात् ॥ १३ ॥

## अथानन्तकेवलज्ञानदर्शनसुखवीर्यसनाथः श्रीअनन्तनाथः—

'अन्तारवारण !' अन्त इत्यस्यारः—प्रापणं तं वारयति यः सः, अनन्त इत्यर्थः । 'कल्याणसार !' भद्रश्रेष्ठ ! 'सवितान !' विः—लाञ्छनश्येनस्तस्य तानो विस्तारः तेन सह वर्त्तते ।'हर' अपनय । कम् ? 'परम्' भावशत्रुम् । 'ईक्षमोहक!' ईक्षो—दर्शनं तत्र यो मोहो—भ्रान्तिस्तद्विनाशे कः—सूर्यः, यथा यथार्थपदार्थावबोधमोहं हरति सूर्यस्तथा प्रभुरपीत्यर्थः। 'समानजय !' मदजययुक्त ! 'आद्यदेव !' देवाधिदेव ! धर्मार्थकामप्रद ! 'महोदयवीरधीर !' मोक्षगमनदक्ष ! 'सोमप्रभाव !' आह्लादक ! 'आगमसिद्धसूरे !' आगमेन सिद्धाः सूरयो यस्य ॥१४॥

## अथोपदिष्टदशविधसाधुधर्मः श्रीधर्मः—

हे धर्म ! ' अर्थकामद ! ' धर्म विनाऽर्थकामद इत्युक्तेऽपि धर्मार्थकामद ! इति ज्ञेयम् । ' कल्याणसारसवितानहरे !' कनककमलविस्तारवत् कपिशकान्ते ! अक्षमोहवनगज ! जय त्वम् । 'आद्यदेव!' देवाधिदेव ! 'महोदयवीरधीर !' मोक्षगमनदक्ष ! 'सोमप्रभाव !' आह्लादक ! 'परमागम !' प्रकृष्टसिद्धान्त ! 'सिद्धसूरे !' सिद्धाः सूरयो यस्य ॥ १५ ॥

अथ निजावतारतरङ्गितसकलाशिवोपशान्तिः श्रीशान्तिः—

'हेश!' हे शान्ते!, 'ह' इति आमन्त्रणे, "हः सम्बुद्धौ पादपूरणे॥" (हैम्यने० ७-१६)इति पाठात्। 'कल्याणसारसवितानहरे!' कल्याणसारसं—कनककमलं तस्य वितानो—विस्तारस्तद्वत् हरे!—पिङ्गकान्ते!। 'अक्षमोहकान्तार!' कः—वातः अन्तः—स्वरूपं समीपं वा तं इयर्ति वाहनतया यः स कान्तारः—वाहनमृगः, वातायुरित्युक्तेः पृषदश्व इत्युक्तेर्वा; अक्षमोहः—करणमनोहरः कान्तारो—लाञ्छनमृगो यस्य। 'वारण!' अवनं ऊः तस्याः आरणं—आगमनं यस्मात्, अशिवरक्षाकृत् इत्यर्थः। 'समान!' सपूज! जय त्वम्। 'आद्यदेव!' देवाधिदेव! 'धर्मार्थकाम!' धर्मार्थं कामः—अभिलाषो यस्य यस्माद् वा। 'उदयवीरधीर!' उदयः—अभ्युदयः तत्र वीरः—विशेषगमनं तत्र धियं—बुद्धिं राति। 'सोमप्रभ!' आह्लादक! 'परमागम!' प्रकृष्टसिद्धान्त! सिद्धसूरे!' सिद्धाः सूरयो यस्मात्॥ १६॥

अथ द्वादशभेदभावनावनवीथीमथपाथः श्रीकुन्थुनाथः—

हे 'अजय!' अजो—लाञ्छनछागः तं याति—प्राप्नोति, कुन्थुनाथ इत्यर्थः। 'परमागम!' माः—श्रीः पङ्क्तिरथन्यायात् प्रभुमाता, परः—प्रकृष्टः तस्याः सकाशात् आगमः—उत्पत्तिर्यस्य।'सिद्धसूरे!' सिद्धाः सूरयो यस्मात्। 'अव' रक्ष। कान्? 'समान्' शत्रुमित्रतृणस्त्रैणाश्मस्वर्णादिषु तुल्यचित्तान्। कल्याणसारसहरे!' स्वर्णपद्मविस्तारिपिङ्गकान्ते!। 'अक्षमोहकान्तारवारण!' आत्ममोहवनगज! आद्यदेव! 'धर्मार्थकामद!' त्रिवर्गप्रद! 'महोदयवीरधीर!' मोक्षगतिप्रगल्भ! 'सोमप्रभ!' आह्लादक!॥ १७॥

अथ हेलादलितसकलक्लेशः श्रीमदरजिनेशः—

हे अर! 'हे कल्याणसार!' कल्याणं—लाञ्छनस्थनन्द्यावर्तलक्षणं मङ्गलं तेन सार! 'सवितानहरे!' सविताना:—चतुरशीतिलक्षसङ्ख्याका हरयः—तुरङ्गा यस्य। 'क्षमोह!' क्षमां—षट्खण्डभरतक्ष्मां ऊहते—पालनार्थं वितर्कयति। 'कान्त!' रम्य!। अथवा 'अक्षमोहकान्त!' अक्षमोहाः कान्ताः—चतुःषष्टिसहस्रसङ्ख्या युवतयो यस्य। 'वारणसमान!' वारणैः—चतुरशीतिलक्षसङ्ख्यैः गजैः समान!—साहङ्कार!। एभिर्विशेषणैश्चक्रवर्तित्वं कथितम्। जय त्वम्। 'आद्यदेव!' देवाधिदेव!। 'धर्मार्थ!' चक्रवर्तिभोगान् मुक्त्वा धर्मं—चारित्रधर्मं अर्थयते, अत एव 'कामद!' स्मरखण्डक!। 'महोदयवीरधीर!' मोक्षगतिप्रगल्भ! 'सोमप्रभाव!' आह्लादक! 'परमागम!' शुभसिद्धान्त! 'सिद्धसूरे!' सिद्धाः सूरयो यस्मात्॥ १८॥

अथ समुल्लसितमोहमल्लमाथः श्रीमल्लिनाथः—

हे 'प्रभाव!' प्रभाशब्देन प्रभावती प्रभोर्माता, पदैकदेशे समुदायोपचारात्, यथा अमरा अमरावती, यदुक्तम्—"अमरा अमरावती" तस्याः सकाशात् आवो—भावः उत्पत्तिर्यस्य स मल्लिः। 'सोम!' सकीर्ते!। यद्वा सोमप्रभाशब्देन प्रभावती भण्यते, सोमा—कीर्तिमती प्रभा यस्याः सा प्रभावती, प्रभावतीत्यत्र अतिशयेन मातुः अतिशयश्च सोमशब्देनोक्तः, तस्याः सकाशात् आवो—भाव उत्पत्तिर्यस्य। 'कल्याणसार!' कल्याणं लाञ्छनस्थकलशरूपं मङ्गलं तेन सार!। 'सवितानहरे!' सवितानः—विस्तृतवत्आयमाणः हरिः—नीलवर्णो यस्य, अत एवाऽनु-

पलक्ष्यज्ञीरूपः प्रभुः कस्यापि करणमोहं न करोति। तदेवाह—'अक्षमोह-कान्तारवारण !' अक्षमोहवनगज ! जय त्वम् । आद्यदेव! 'धर्मार्थ-कामप्रद!' मोक्षगतिदक्ष ! प्रकृष्टसिद्धान्त ! सिद्धाः सूरयो यस्मात् ॥ १९ ॥

**अथ पादाम्बुजचुम्बितविबुधाधिपमधुव्रतः श्रीमुनिसुव्रतः—**

हे 'परमागम !' मुनिसुव्रत !, यतः माशब्देन पद्माऽभिधीयते, सा च प्रभोर्माता, परः—प्रकृष्टस्तस्याः सकाशात् आगमः—उत्पत्तिर्यस्य । 'कल्याणसारस !' सरसि भवः सारसः—कूर्मः कल्याणः—उत्कृष्टः सारसः—लञ्छनकूर्मो यस्य । 'वितानहरेक्ष !' वितानं—यज्ञस्तं पशु-वधप्रधानमिति तं हरति तादृशः ईक्षः—केवलालोको यस्य । मोहव-नगजसम ! जय त्वम् । 'आद्यदेव !' देवाधिदेव ! धर्मार्थकामप्रद ! मोक्षगमनदक्ष ! सोमप्रभाव !' आह्लादक ! 'सिद्धसूरे!' सिद्धाः सूरयो यस्मात् ॥ २० ॥

**अथ चरणनखकिरणजलक्षालितनमज्जनव्रीजिनः श्रीनमिजिनः—**

'जयाद्य !' नमे ! जयशब्देन भगवत्पिता विजयो भण्यते, "ते लुग् वा" (सिद्ध० ३।२।१०८) इति विशब्दलोपात्, यद्वा "जयो जयन्ते विजये" (हैम्यने० २–३५२) इत्युक्तेः, स आद्यः—प्रथमो जनकत्वेन यस्य । 'देवाधिदेव !' 'कल्याणसारस !' कल्याणं—श्रेष्ठं सारसं—प्रस्तावात् लाञ्छननीलोत्पलं यस्य । 'वितानहरेक्ष !' यज्ञनिषेध-कालोक ! मोहवनगजसम ! मोक्षगतिदक्ष ! 'सोमप्रभ !' आह्लादक! 'अव' रक्ष । कम् ? 'परम्' प्रणतिप्रधानम् । 'आगमसिद्धसूरे!' आ-गमेन सिद्धाः सूरयो—गणधरा यस्य ॥ २१ ॥

अथ सकलारिष्टवनविनिर्दलनचक्रनेमिः श्रीमदरिष्टनेमिः–

हे 'कल्याणसारस !' कल्याणः–प्रशस्तः सारसः–सरसीभवः प्रस्तावाद् लाञ्छनशङ्खो यस्य। 'सवितानहर !' विवाहयज्ञनिषेधक !। 'ईक्ष !' शशकशूकरकुरङ्गादिदर्शनं यस्य, रुद्धान् पशून् दृष्ट्वा प्रभुर्विवाहं न चकार इत्यर्थः। मोहवनगज !। 'जयाद्य !' "जयो जयन्ते विजये" (हैम्यने०२–६५२) इत्युक्तेः जयशब्देन विजयो भण्यते, 'ते लुग् वा' (सिद्ध० ३–२–१०८) इत्यनेन समुद्रशब्दलोपे विजयशब्देन समुद्रविजयो भण्यते, स आद्यो जनकत्वेन यस्य। 'देव !' देवाधिदेव !। 'धर्मार्थकामद !' धर्मार्थकामप्रद !। मोक्षगतिदक्ष !। 'सोमप्रभ !' आह्लादक ! 'अव' रक्ष। कम् ? 'परम्' पशुवर्ग तद्रक्षावसरस्तवेत्यर्थः। 'सिद्धसूरे !' आगमेन सिद्धाः सूरयो–गणधरा यस्य ॥ २२ ॥

अथ त्रिदशराजकुञ्जरसलीलगामी श्रीपार्श्वस्वामी—

हे 'सवितानहरे !' सवितानः–विस्तारवान् मूर्ध्नि लाञ्छने वा हरिः–सर्पो यस्य। 'कल्याणसार !' भद्रश्रेष्ठ !। अक्षमोहवनगजसम !। जय त्वम्।'आद्यदेव !' देवाधिदेव !। धर्मार्थकामप्रद ! मोक्षगतिदक्ष ! 'सोमप्रभाव !' आह्लादक ! 'परमागम !' शुद्धसिद्धान्त ! 'सिद्धसूरे!' सिद्धाः सूरयो यस्मात् ॥ २३ ॥

अथ घोरविघ्नघनघटाविघटनसमीरः श्रीमहावीरः—

हे 'वीर !' वर्द्धमान ! 'कल्याणसार !' भद्रश्रेष्ठ !। 'सवितानहरे !' सवितानो हरिः–लाञ्छनसिंहो यस्य। अक्षमोहवनगजतुल्य !।

जय त्वम् । 'अद्य देव ! ' अद्य—साम्प्रतम् । देवाधिदेव !, वर्त्तमानतीर्थाधिपत्वात्; यदि वा आद्यदेवाधिदेव !; यद्वा पश्चानुपूर्व्या प्रथमजिन ! । धर्मार्थकामप्रद ! । ' महोदय ! ' महान् उदयो यस्मात् । ' धीर ! ' सङ्गमकाद्युपसर्गसंसर्गेऽप्यक्षोभ्य ! । 'सोमप्रभाव ! ' आह्लादक !। ' परमागम ! ' शुभसिद्धान्त !। सिद्धाः सूरयो यस्मात् ॥२४॥

**अथ प्रथमतीर्थकरप्रथमगणधरः कषायकरिखण्डनपुण्डरीकः**

**श्रीपुण्डरीकः—**

हे ' कल्याणसारस ! ' सिताम्बुजस्येव कल्याणहेतुत्वात्, ततः पङ्क्तिरथन्यायेन पुण्डरीक ! । ' सूरे ! ' गणधर ! । ' आद्य ! ' अस्यामवसर्पिण्यां प्रथम !। ' देव ! ' दिव्यरूपेण त्रिदश !। ' वितानहरेक्ष ! ' यज्ञनिषेधकालोक ! । ' मोहकान्तारवारणसमान ! ' अज्ञानवनगजसम ! । जय त्वम् । ' धमार्थकामद ! ' त्रिवर्गप्रद !, भगवदाराधनाद्धि मोक्षप्राप्तिहेतुधर्मप्रधानफलानुषङ्गिकौ अर्थकामावपि स्याताम्, यथा प्रधानधान्यफलात् कृषिकर्मणः पलालप्राप्तिः । ' महोदयवीरधीर ! ' मोक्षगतिदक्ष ! । ' सोमप्रभाव ! ' आह्लादक ! । ' परमागमसिद्धसूरे ! ' जिनागमप्रख्यात ! ॥ २५ ॥

**अथ कथितकार्याकार्य आचार्यः—**

हे ' सूरे ! ' आचार्य !। कीदृशः ? ' कल्याणसाः ' कलिः—कलहस्तस्य आणः—कलकलस्तं स्यति । ' रसवितानहरेक्ष ! ' रसाः—शृङ्गाराद्या दुग्धदध्यादयो वा तेषां वितानं—विस्तारं हरन्ति ये तपोधनास्तान् स्मारणवारणाभिरीक्षते । मोहकाननगज ! । जय त्वम् । ' आद्यदेव ! '

यतिक्रियाकाण्डव्यवहारो यस्मात्। 'धर्मार्थकामद!' धर्मार्थकामप्रद!, आचार्यसेवया तदवाप्तेः। 'महोदयवीरधीर!' मोक्षगतिदक्ष!। 'सोमप्रभाव!' आह्लादक!।' परमागमसिद्ध!', जिनसिद्धान्तज्ञानं विना आचार्यपदानवाप्तेः ॥२६॥।

अथ भवोधप्रबन्धानध्याय उपाध्यायः—

हे 'परमागम्!' उपाध्याय!, परमागमं—जिनोक्तसिद्धान्तं आचष्टे णिचि किपि णिलोपे च परमागम्—उपाध्यायः, सिद्धान्ताध्यापनाधिकृतो ह्युपाध्यायः। 'असिद्धसूरे!' "षिधू शास्त्रे माङ्गल्ये च" सेधनं सिद्धं—शास्त्रम्, नास्ति सिद्धं येषां तेऽसिद्धाः—अनधीनशास्त्राः शिष्याः सूरयः—पण्डिता यस्मात्। भव्याम्भोजवनरवे ! करणमोहवनगजसम !।जय त्वम्। 'आद्यदेव!'आद्यः—मुख्यः"इच्छा मिच्छा तहकारे" (आ. नि. गा. ६६६) इत्यादिदशविधसामाचारीरूपो देवः—साधुव्यवहारो यस्मात्। धर्मार्थकामप्रद!। 'महोदय!' अपरापरशास्त्रपाठेन महान् उदयो यस्मात्। अवनं—ऊः—जीवरक्षा तस्यां ईर! प्रेरक!। 'धीर!' धियं—बुद्धिं राति। [२००] 'सोमप्रभ!'

× × × × × × × ×

गजसम!।जय त्वम्। 'आद्यदेव!' आद्यो देवः—देवतत्त्वं यत्र। 'धर्मार्थकामदमहोदय!' धर्मार्थकामप्रदं महः—तेजो यस्याः सा धर्मार्थकामदमहो दया—कृपा यत्र, दयां विना सत्त्वरक्षाया असम्भवात्। वीरं करोति णिचि अचि च वीर!, एवं धीर!, धीरत्वं वीरत्वं च सत्त्वरक्षातो भवतीत्यर्थः। 'सोमप्रभाव!' आह्लादक!। 'परमागमसिद्ध!' जिनागमे प्रतिष्ठित!, शेषतीर्थिकैस्तदज्ञानात्। 'सूरे!' अनर्थनिवारणविचक्षण! ॥ ३२ ॥

---

+ अतः परं विशीर्णः पाठः सर्वासूपलब्धासु प्रतिषु।

अथ कृतसुकृत्यसाङ्गत्यं सत्यम्—

हे 'कान्तारव!' सत्यशब्द! कं—सुखं अन्ते यस्मात् इति व्युत्पत्त्या सत्यस्यैव परिणामसुखदत्वात्। जय त्वम्। भद्राम्भोजवनरवे!। 'क्षमोह!' क्षमः—सङ्गतः ऊहो—वितर्को यत्र, सत्यं यथा यथा विचार्यते तथा तथा घटते इत्यर्थः। 'अरण!' अकलह!। 'समान!' सपूज!। 'आद्यदेव!' आद्यो—ज्येष्ठो देवः—स्तुतिर्यस्मात्, सत्यवाक् सर्वत्र पूज्यते स्तूयते चेत्यर्थः। 'धर्मार्थ!' धर्मप्रयोजन!। 'कामद!' वाञ्छितार्थप्रद!। 'महोदय!' महान् उदयो यस्मात्। 'वीर!' अनर्थप्रत्यर्थिजयशूर!। 'धीर!' बुद्धिप्रद!। 'सोमप्रभाव!' सत्कीर्त्तिप्रताप!। 'परमागमसिद्ध!' जिनागमप्रतिष्ठित!, अन्यत्र सत्याभावात्; तथा हि—"न हिंस्यात् सर्वभूतानि" (छां० ८ अ.) इत्युक्त्वा "सप्तदश प्राजापत्यान् पशून् आलभेत" (तै.सं.अ.१.४) "अग्निषोमीयं पशुमालभेत" (ऐ. अ. ६. ३)

"षट् शतानि नियुज्यन्ते पशूनां सप्तमेऽहनि।
अश्वमेधस्य वचनात् न्यूनानि पशुभिस्त्रिभिः॥" ( )

तथा "गावः पूज्याः" ( ) इत्युक्त्वा "अनड्वाहीमालभेत" ( ) इत्याद्यसत्यभणनम्। 'सूरे!' सुगतिलाभादिदानकोविद!॥ ३३॥

अथ स्वर्गापवर्गपथपाथेयं अस्तेयम्—

हे 'परमागमसिद्ध!' परेषां मा—श्रीः तस्या आगमः—आगमनं निवृत्तिरित्यर्थः तेन सिद्ध!—निष्पन्न!। जय त्वम्। 'आद्यदेव!'

आद्यः—श्रेष्ठो देवो—व्यवहारो यस्मात्, स्तेयकारिणो हि लोकैर्दूरतः परिह्रियन्ते। भद्राम्भोजवनरवे॥ करणमोहारण्यभञ्जनगज॥ 'समान!' मानयुक्त॥ धर्मार्थकामप्रद॥ 'महोदयवीर!' अभ्युदयसम्पादने शूर!॥ 'धीर!' परद्रव्यजिघृक्षानाकुल॥ 'सोमप्रभाव!' सकीर्त्तिप्रताप! 'सूरे!' व्यसनवारणपण्डित!॥ ३४॥

## अथ समस्तव्रतत्रयं श्रीब्रह्मचर्यम्—

हे 'अक्षमोहकान्तारवारण!' अक्षाणि मोहयन्ति याः कान्ताः—स्त्रियः तासु आरः—गमनं तस्य वारण!—निषेधक!। जय त्वम्। भद्राम्भोजवनरवे!। 'समान!' सपूज!, ब्रह्मचर्यवन्तः सुरैरपि पूज्यन्त इत्यर्थः। 'आद्यदेव!' आदिः—कान्तारमणे मूलं स चाऽसौ इः—कामश्च तेना अदेव!—अक्रीड!। 'धर्मार्थ!' धर्म एव अर्थः—प्रयोजनं यस्य। 'कामद!' कामं—स्त्रीपुंनपुंसकवेदोदयरूपं विकारं द्यति—खण्डयति। 'महोदयवीर!' महोदयो—मोक्षः तत्सम्पादने शूर!। 'धीर!' धैर्ययुक्त!। 'सोमप्रभाव!' सकीर्त्तिप्रताप!। 'परमागमसिद्धसूरे!' परमागमे—जिनागमे सिद्धाः सूरयो यस्मात्॥ ३५॥

## अथ जनितसर्वविरतिस्वाजन्यं आकिञ्चन्यम्—

हे 'परमागम!' परा—प्रकृष्टा मा—लक्ष्मीस्तस्या आगमः—सम्बन्धस्तस्याऽभाव!। कीदृश? 'सिद्ध!' प्रतिष्ठित!, क्व? 'धीर-सोमप्रभौ' धीरो—धनाकाङ्क्षाऽनाकुलो यः सोमः—सकीर्त्तिः प्रभुः—इन्द्रियाणां प्रभुः—विष्णुस्तत्र। पुनः कीदृशे? 'कल्याणसारसविता-

नहरे !' कल्याणसारं–भद्रधनं स्यति यद् अर्थात् पापं तस्य वितानहरे !–विस्तारहारिणि । अक्षमोहारण्यगजसम ! । जय त्वम् ॥ 'आद्यदेव ! '। आदित एव अव्यवहार ! । धर्मार्थकामप्रद ! । क्रमात् 'महोदयवीर !' महोदयो–मोक्षस्तत्सम्पादने शूर ! । 'सूरे ! ' सकलक्लेशविनाशविशारद ! ॥ ३६ ॥

**अथ व्रतान्यागमगम्यानि इति कृतमुक्तिकान्तासमागमः परमागमः—**

'हे परमागम !' जिनसिद्धान्त ! जय 'आद्यदेव !' विशिष्टव्यवहारसार ! । 'कल्याणसारसवितानहरेक्ष !' कल्याणसारं स्यति यत् कल्याणसारसं–पापं तस्य वितानहरः ईक्षः–दर्शनं यस्मात्, आगमं विना यथावस्थितवस्तुतत्त्वावलोकाभावात् । **यदवोचाम—**

**न देवं नादेवं न गुरुमकलङ्कं न कुगुरुं**
**न धर्मं नाधर्मं न गुणपरिणद्धं न विगुणम् ।**
**न कृत्यं नाकृत्यं न हितमहितं नापि निपुणं**
**विलोकन्ते लोका जिनवचनचक्षुर्विरहिताः ॥** (सिन्दूर० १७)

मोहारण्यगजसम !। धर्मार्थकामप्रद !, जिनागमोक्तकरणेन तेषां लाभसम्भवात् । 'महोदयवीरधीर !' महोदयो–मोक्षस्तत्र वीरो–विशिष्टगमनं तत्र धियं–बुद्धिं राति । 'सोमप्रभाव ! ' आह्लादक ! सिद्धः–सर्वप्रमाणप्रतिष्ठितो यस्मात् । तथा 'सिद्धसूरे ! ' सिद्धाः सूरयो यस्मात् ; यद्वा सिद्धः–सर्वप्रमाणप्रतिष्ठितो यः स्याद्वादः नित्यानित्याद्यनेकधर्मशबलैकवस्त्वभ्युपगमस्वरूपस्तत्प्रतिपादने शूर !–

पण्डित ! । स्याद्वाद एव प्रमाणसिद्धः, तथा हि–जीवो द्रव्यस्वरूपेण नित्यः, सुरनरनारकादिपर्यायैः अनित्यः। यदि पुनरेकान्तेन नित्यः स्यात् तदानीमप्रच्युतानुत्पन्नस्थिरैकस्वभावतया तस्यापरापरपर्यायरूपेण परिणामो न स्यात्। यदि पुनरेकान्तेन अनित्यः स्यात् यदि(तर्हि?)पूर्वपर्यायादपरपर्यायोत्पत्तौ जीवत्वमपि विनश्येत् ।न चैवम् , तस्माद् एकस्यापि वस्तुनो[नित्याऽ]नित्यत्वम् ।तथा गोत्वलक्षणं सामान्यमेकं सकलगोपिण्डेष्वनुगतम् । तेषु धवल–शबलत्वादिको विशेषोऽप्यस्ति ।यदि पुनर्विशेषो न भवेत् तदा सकलगोपिण्डानामेकत्वमेव स्यात् , इत्येकस्यापि सामान्यविशेषरूपत्वम् ।तथा घटः स्वरूपेण सन् , पररूपेणाऽसन् , यदि पुनः पररूपेणाऽसन् न स्यात् तदा घटे घटरूपमिवापरसकलपदार्थरूपमुपलभ्येत । न चोपलभ्यते, तस्माद्[एकस्य]अपि सदसद्रूपत्वम् । इत्यादि स्याद्वादः शास्त्रान्तरादवसेयः ।। ३७ ।।

अथाऽऽगमसमुद्रस्य सरस्वती सरस्वती—

हे 'कल्याणसार !' कल्याः–सम्यगर्थप्रतिपादनदक्षाः संस्कृता इत्यर्थः, तद्रूपा ये आणाः–शब्दाः तैः सार !; यद्वा "कल्यं प्रभाते मधुनि सज्जे दक्षे निरामये । कल्या कल्याणवाचि स्यात्" ( हैम्यने० २–३३९ ) इत्युक्तेः कल्या–कल्याणी वाक् संस्कृतेत्यर्थः, तस्या आणः–भणितिस्तेन सारस्तं करोति णिचि क्विपि णिलोपे च कल्याणसार !–सरस्वति !, त्वमेव संस्कृतोक्तिसारं जनं करोषीत्यर्थः, "रो रे लुग् दीर्घश्चादिदुतः" ( सिद्ध० १–३–४८ ) इति रलोपः । कीदृक्षे ? 'रसवितानहरे !' रसैः–शृङ्गाराद्यैः वितानं–शून्यं हरति–नीरसकवितामपनीय सरसकवितां जनयति इत्यर्थः । पुनः कीदृक्षे ?

'अक्षमोहकान्तारवा' अक्षो—ज्ञानं तत्र यो मोहो—भ्रान्तिः स एव कान्तारं—काननं तस्य 'पैं ओवैं शोषणे' वानं वाः—शोषो यतः। पुनः किंविशिष्टे? 'रणसमानजयाद्यवदे!' रणे—वाग्युद्धे समानः—साहङ्कारः जयः—परवादिपराजयः स आद्यो येषां कीर्तिधनलाभादीनां ते रण-समानजयाद्याः तान् ददाति। 'अव' रक्ष। विशेषानुपादानात् विश्वमिति गम्यम्। पुनः किंविशिष्टे? 'धर्मार्थकामदमहोदयवीः' धर्मार्थकाम-प्रदान् महोदयान्—अभ्युदयान् वेति—प्रसवार्थे गर्भत्वेन गृह्णाति 'वींक् प्रजनने' इत्यादिधातोः प्रयोगात्। पुनः किंविशिष्टे? 'अधी-रसोमप्रभावपरमागमसिद्धसूरे!' अधियं—कुबुद्धिं ईरयति—क्षिपति अधीरः, सोमप्रभावः—आह्लादकः परमः—प्रकृष्टः यः आगमः—सिद्धा-न्तस्तेन सिद्धाः सूरयो यतः सकाशात्, ईदृगागमविदः कोविदा वाग्देवीप्रसादादेव भवन्ति इत्यर्थः ॥ ३८ ॥

**अथ पुरुषार्थचतुष्टयमध्यात् प्रशमपयःप्रशमिताऽशुभकर्म-धर्मो धर्मः—**

हे धर्म! हे 'कल्याणसारसवितानहरे!'। भद्राम्भोजवनरवे!। 'अक्षमोहकान्तारवारणसमान!'। अक्षवितर्कवनगजसम!। जय त्वम्। 'आद्यदेव!' आद्यः—प्रथमो देवो—देवतत्त्वं यत्र, गुरोरु-पलक्षणं चैतत्, गुरुं विना देवस्याऽप्यपरिज्ञानात्, देवगुरुप्रतिपत्तिं विना च धर्मस्यासम्भवात्। 'अर्थकामद!' अर्थकामप्रद!। **'धर्मादर्थोऽर्थतः कामः'** (                ) इत्युक्तेः। 'महोदयवीरधीर!' क्रमेण मोक्षगतिदक्ष!। 'सोमप्रभाव!' आह्लादक!। 'परमागमसिद्ध!' जिनागमेन प्रतिष्ठित!। 'सूरे!' दौर्गत्यरक्षणदक्ष! ॥ ३९ ॥

अथ दौस्थ्यप्रमथनसमर्थः अर्थः—

हे 'सार !' अर्थ !। 'कल्याण !' श्रेष्ठ !। 'सवितानहरे !' सवितानाः—सविस्ताराः हरयः—तुरङ्गमा यस्मात्। 'अक्षमोहकान्त !' अक्षमोह्याः कान्ताः—स्त्रियो यस्मात्। 'आरवारणसमान !' आरं—अरेः समूहस्तद्वारणे साहङ्कार !। जय त्वम्। 'आद्यदेव !' आद्यः—श्रेष्ठः देवः—क्रीडादिर्यस्मात्। धर्मादर्थस्य सुपात्रनिक्षेपाद् धर्मम्, "अर्थैः अर्था निबध्यन्ते" ( ) इत्यतः अर्थम्, "अर्थतः कामः" ( ) इत्यस्माच्च कामं ददाति। 'महोदयवीरधीर !' महोदयाः—अभ्युदयवन्तो वीराः—सुभटाः, धीराः—पण्डिताश्च यस्मात्। 'सोमप्रभावपरमागम !' सोमः—सत्कीर्त्तिः प्रभावः—प्रतापः परमः—प्रकृष्टः आगमो—लाभो यस्य। 'सिद्धसूरे !' सिद्धाः—प्रख्याताः सूरयो यस्मात्, निर्धनानां विदुषामपि ख्यातेरभावात् ॥ ४० ॥

अथ भवाभिनन्दिजनाभिरामः कामः —

'हे काम !' हे 'कल्याणसारस !' कल्याणं—मङ्गलं सारं—बलं च स्यति। 'वितानहरे !' विगतविस्तारो हरिः—इन्द्रो यस्मात्, "कामैकतवैकल्याद् अहिल्याभिगमपरः कुपितगौतमशापेन भगसहस्राङ्कितततनुर्लज्जया शक्रः सङ्कुचितः।" इति श्रुतिः। 'अक्षमोहकान्तारव !' अक्षाणि मोहयति अक्षमोहकान्तानां—पुरुषाणां स्त्रीणां वा आरवः—शब्दो यस्मात्। 'आरणसमान !' आरणं—आरणदेवलोकं अभिव्याप्य समान ! – सदर्प !, आरणशब्देन एकादशो देवलोकः,

१ वा. रा. बाल. स. ४८–४९, तथा वा. रा. उत्तर. स. ३०

तदुक्त्या समपङ्क्तिरच्युतोऽपि लक्ष्यते, तौ यावत् कामस्फूर्तिभावात् । उक्तं च—

"दो कायप्पविचारा कप्पा फासेण दोण्णि दो रूवे ।
सद्दे दो चउर मणे उवरि प्पवियारणा नत्थि ॥"

(प्रव. गा. १४३९)

जय त्वम् । त्रिजगतः 'आद्यदेव !' सुरासुरज्येष्ठ !, हरिहरादिभिरप्यखण्डिताज्ञत्वात् । 'धर्मार्थि !' धर्मप्रयोजन !, "कामसेवया सन्ततिः, सन्ततेर्देवगुर्वादिपूजा, ततो धर्मः" इत्याहुर्लोकाः; वयं तु ब्रूमः— 'धर्मार्थि !' धर्मनिवर्तक !, अर्थशब्दस्य निवृत्तिपर्यायत्वात्, यथा मशकार्थो धूमः । 'दमहोदय !' दमं—इन्द्रियजयं हन्ति तादृग् उदयो यस्य । 'वीर !' त्रिभुवनैकभट ! । 'धीर !' तपस्तेजोदुरासदेभ्यः साधुभ्योऽपि अभीरुतया साहसिक ! । 'सोमप्रभावपर !' सोमप्रभायां—चन्द्रोदये आवपर ! वृद्धिप्रधान !, चन्द्रस्य कामोद्दीपनविभावत्वात् । 'मागमसिद्धसूरे !' मागमे —लक्ष्मीविरामे सिद्धसूरे !—मन्त्रसिद्धकोविद ! ॥ ४१ ॥

अथ व्यसनपरम्परामोक्षपरो मोक्षः—

'हे महोदय !' मोक्ष ! । कल्याणसारसवितानहरे ! । भद्राम्भोजवनरवे ! । सकलकर्मक्लेशमुक्तत्वात् "अक्षमोहकान्तारवारणसमान !" इन्द्रियमोहारण्यगजसम !, अनिन्द्रियत्वात् । जय त्वम् । 'आद्यदेव !' आदित एव क्रीडाव्यवहारवर्जित !, निःक्रियत्वात् । 'धर्मार्थकामद !' धर्मार्थकामखण्डक !, । "पुण्यपापक्षयान्मुक्तिः"

१ प्पविया° मु. २ फरिसेण° मु. । ३ नत्थि वियारो उवरि यत्थी ॥ मु.

(                    ) इत्युक्तेः । 'वीरधीर !' वीराः—कर्मारिसार-शूराः ये तेषां धियं—संसारत्यागरूपां रुचिं राति । 'सोमप्रभाव !' आह्लादक ! । 'परमागमसिद्धसूरे !' परमागमेन सिद्धाः सूरयः—पण्डिता आचार्या वा यत्र ॥ ४२ ॥

अथ दृष्टपरब्रह्मा ब्रह्मा—

हे 'क !' हे ब्रह्मन् ! । 'अन्तारव !' अन्तः—मुखस्य मध्ये रवो—वेदध्वनिर्यस्य । "रो रे लुग् दीर्घश्चादिदुतः' (सिद्ध० १-३-४८) इति रलोपः पूर्वस्य च दीर्घः । 'कल्याणसार !' कल्याणं—सुवर्णं तद्वत् सारो—गर्भो यस्य, हिरण्यगर्भ इत्युक्तेः। 'सवितान !' विः—पक्षी हंसस्तस्य तानस्तेन सह वर्तते ।'हरेक्षमोह !' हरस्य—लिङ्ग रूपस्य ईक्षः—पर्यन्तालोकनं तत्र मोहः—अज्ञानं यस्य, तत्पर्यन्तस्य तेनाऽलब्धत्वात् । 'अरण !' निःकलह ! । 'समान !' सपूज !। जय त्वम् । 'आवदेव !' सुरज्येष्ठ ! । 'धर्मार्थकामद !' धर्मार्थकामप्रद ! । 'महोदयवीर !' महान् जगत्त्रयसम्बन्धित्वेन गुरुः उदयः—उत्पत्तिस्तत्र वीर !—शूर ! । 'धीर !' बुद्धिप्रद ! । 'सोमप्रभावपरम !' सोमप्रभावः—सकीर्त्तिमाहात्म्यः परमः—ॐकारो यस्य । यदुक्तम्—" परमः परे । अग्रेसरप्रथमयोरोङ्कारे परमं पुनः ॥ स्यादव्ययमनुज्ञायाम् " (हैम्य ३-४६१-४६२)। 'आगमसिद्धसूरे !' आगमे—त्रयीरूपे सिद्धसूरे ! प्रथमप्रणेतृत्वेन प्रसिद्धाचार्य ! ॥ ४३ ॥

अथ कलहकेलिविशारदः नारदः—

हे 'कान्त !' कः—ब्रह्मा तस्य अन्तः—अवयव एव, ब्रह्मपुत्र-

---

१ °सूरयो विद्वांसः° प्रत्यं० । २ शिव पु० विद्येश्वर संहिता अध्याय० ६-७.

त्वात् । 'कल्याणसार!' कलये—कलहाय यः आणः—शब्दस्तेन सार—श्रेष्ठ !, कलिप्रिय इति श्रुतेः । 'सवितानहरे !' सवितानः—विस्तारवान् हरिः—इन्द्रो यस्मात्, मर्त्यलोकस्वरूपकथनेन इन्द्रप्रीतिजनकत्वात् । 'अक्षमोह !' अक्षमां—क्रोधं ऊहते—स्तोकापराधेऽपि कुप्यतीति; अथवा अक्षाः—स्फटिकमणिकास्तेषां मा—लक्ष्मीस्तया ऊहते, अक्षमालीत्यर्थः । 'आरवारण !' आरं—अरिसमूहस्तत्र वानं—वा—गतिस्तया रणो यस्मात् । 'समान !' सपूज ! । जय त्वम् । 'आद्यदेव !' श्रेष्ठक्रीड ! । 'धर्मार्थकामद !' धर्मार्थकामखण्डक !, रणकरणात् लोकानाम् । 'महोदयवीरधोर !' मोक्षगतिदक्ष ! । 'सोमप्रभ !' चन्द्रोज्ज्वल ! । 'आव !' परमरक्षाप्रधान ! । 'आगमसिद्ध !' सिद्धान्तप्रसिद्ध ! 'सूरे !' पण्डित ! ॥ ४४ ॥

**अथ प्ररूपितविविधाध्वरभेदः वेदः—**

हे 'आगम !' वेद ! । 'कल्याणसार !' कल्याः—पटवः उदात्तानुदात्तस्वरितरूपा ये आणाः—शब्दास्तैः सार !—श्रेष्ठ !, प्रायः शब्दप्रधानो वेदो नार्थसारः । 'सवितान !' विविधाध्वरप्ररूपक ! । 'हे हरेऽक्षमोह !' हरे—ईश्वरे अक्षमोहः अक्षमां—क्रोधं ऊहयति, तन्निराकरणप्रवणत्वात् । 'कान्तारवारण !' कान्तासु आरः—गमनं तं वारयति, ब्रह्मचर्येण वेदाध्ययनात् । 'समानजयाद्यदेव !' समानजयः—मानजयाभ्यां युक्तः आद्यदेवः—पुराणपुरुषो यस्मात्, "क्रतुपुरुषः" इत्युक्तेः।"मत्स्यरूपेण समुद्रावगाहनात् वेदानाकृष्य पूजां जयं च प्राप हरिः" इति श्रुतेर्वा ।'धर्मार्थकामप्रद !'। महोदयवीरधीर !' महोदयः—

१ विशेषार्थिना भाग. ८ स्कं. अ. २४ विलोकनीयः ।

महोज्ज्वलो योवीरः--होमाग्निः तत्र धियं--बुद्धिं राति । 'सोमप्रभ !' सोमः--लताविशेषः तस्य प्रभा यस्मात् ।'अव' रक्ष । 'परं' पशुं निरपराधं व्यापाद्यमानं अनुमतं ममेदमिति अनुमतौ .पञ्चमी, दुर्गतिगर्तानिपातहेतुत्वाद् न युक्तः प्राणवध इति भावः । 'सिद्धसूरे !' सिद्धाः--ख्याताः सूरयो--द्विजाचार्या यस्मात् ॥ ४५ ॥

**अथ जगदनर्थनिदानदानववधप्रभविष्णुः विष्णुः--**

हे 'हरे !' विष्णो ! 'अव' रक्ष । कम् ? 'परम्' अन्यं जनं जगत् इत्यर्थः, पालनेऽधिकृतत्वात् । 'कल्याणसार !' कलिः--संग्रामस्तत्र आणः--सिंहनादः शङ्खध्वनिर्वा तेन सार !--श्रेष्ठ !। 'सवितान!' विः--गरुडस्तस्य तानः तेन सह वर्तते । 'अक्षमोहकान्त !' अक्षमोहाः--कान्ता द्वात्रिंशत्सहस्रसङ्ख्याः प्रिया यस्य । 'आरवारण !' अरिसमूहनिषेधक ! । 'समानजयाद्यदेव !' मानजयः--दर्पखण्डना तेन युक्ताः आद्यदेवाः--पूर्वदेवा असुरा यस्मात् । 'धर्मार्थकामदमहोदय !' धर्मार्थकामप्रदो महान् उदयो यस्य । 'वीर !' विक्रमप्रधान ! । 'धीर !' सङ्ग्रामस्थिर ! । 'सोमप्रभ !' सह उमया-गौर्या वर्तते सोमो--हरस्तस्य प्रभावो यस्मात् । "किलैकदा हरेण दानवाय वरो दत्तः--यस्य शिरसि त्वं हस्तं दास्यसि स भस्मसाद् भविष्यतीति । स दानवो देवीलुब्धो देवस्यैव मूर्ध्नि हस्तं दातुं प्रवृत्त : । ततः शम्भुर्विष्णुपार्श्वे ययौ । तद्वृत्तान्तं विज्ञाय विष्णुना स्त्रीरूपं अद्भुतं चक्रे,तत्प्रार्थनापरञ्च दानवं प्रोचे यथा--मत्प्रत्ययार्थं मस्तके हस्तं देहि । सोऽपि कामविह्वलस्तदुक्तं कृत्वा भस्मसादभूत् ।

---

१ विलोक्यतां भाग० स्कं. १० अ. २८ ।

ततः स्वास्थ्यं स्थाणुरवाप । " इति श्रुतेः । सोमात् प्रभा यस्येति वा, हरप्रभावाच्चक्रं प्रापदिति । यदुक्तम्—

" हरिस्ते साहस्रं कमलबलिमाधाय पदयो-
र्यदेके नैतस्मिन्निजमुदहरन्नेत्रकमलम् ।
गतो भक्त्युद्रेकः परिणतिमसौ चक्रवपुषा
त्रयाणां रक्षायै त्रिपुरहर ! जागर्त्ति जगताम् ॥"
( )

' आगमसिद्ध ! ' आ—लक्ष्मीस्तस्यां गमः—गमनं तेन प्रख्यात ! । ' सूरे ! ' दानववधूवैधव्यदीक्षागुरो ! ' ॥ ४६ ॥

**अथ पल्लवितोपेन्द्ररुद्रः बलभद्रः—**

हे ' कामद ! ' कामपाल !, कामं दयते—पालयति । ' कल्याणसारसवितानहरे !' कल्याणसारो—भद्र श्रेष्ठः सवितानो—विस्तारवान् हरिः—विष्णुर्यस्मात् । 'अक्षमोह !' मनोहर !, व्रतस्थमपि तं दृष्ट्वा रूपहृतहृदया कण्ठदत्तपाशं डिम्भं कुम्भधिया कूपे चिक्षेप मृगाक्षी । ' कान्तारवारणसमान ! ' कान्तारवारणः—वनगजः स्थाम्ना तत्सम ! । जय त्वम् । 'आद्यदेव ! ' मुख्यजयेच्छ !। 'धर्मार्थ !' धर्मप्रयोजन !, ऊर्ध्वगतिगामित्वात् । ' महोदयवीरधीर ! ' महोदयाः—अभ्युदयवन्तो ये नृपास्तेषां वीरः—विशिष्टकम्पस्तत्र दक्ष ! । ' सोमप्रभाव ! ' चन्द्रोज्ज्वल ! । ' परसागमसिद्धसूर ! ' परेषां मा—लक्ष्मीस्तस्या आगमः परमागमस्तत्र सिद्धाचार्य ! ॥ ४७ ॥

**अथ जनितजनश्रीः श्रीः—**

हे 'ए !' हे लक्ष्मि !, 'या मा ता सा आ ई' इत्येकाक्षराणि षट् नामानि श्रिय इति । कीदृशे ? 'कल्याणसारसवितानहरे !' कल्याण-

सारसं–कनकपद्मं तस्य वितानं–विस्तारं हरति, निजनितम्बव्याप्त्या आवृणोति कमलालया इत्यर्थः । 'अक्षमोहकान्तारवारणसमानजयाद्यदे!' अक्षाणि मोहयन्ति याः कान्ताः–स्त्रियः, आराः–शीघ्रगामिनो ये वारणा–हस्तिनः,समानः–साहङ्कारो यः जयः–शत्रुविजयस्ते आद्या येषां कीर्त्यादीनां तान् ददाति । 'अव' रक्ष । विश्वमिति गम्यम् । कीदृक्षे ? 'धर्मार्थकामदमहोदयवीः' धर्मार्थकामप्रदं महोदयं वेति–प्रसवाय गर्भत्वेन गृह्णाति । पुनः कीदृक्षे? 'अधीरसोमप्रभावपरमागमसिद्धसूः' अधीरः–ऋतुकाम्यकः सोमप्रभावः–आह्लादको यः परमागमो–जिनागमः तत्र सिद्धं–कथितं रूपसौभाग्यभोगस्वर्गादिकं सूते–प्रसूते, सुपात्रनिक्षेपाज्जनयति, धनरूपदेवतारूपयोः श्रियोरभेदोपचारादिदमुक्तम् ॥ ४८ ॥

**पूर्वं विषयसुखानुभवः कामः प्रोक्तः, साम्प्रतं श्रीनन्दनः समरसंरम्भविजृम्भितोद्दामद्युम्नः प्रद्युम्नः—**

हे 'ए!' प्रद्युम्न!, अः–विष्णुः तस्य अपत्यं इः । 'कल्याणसार!' भद्रश्रेष्ठ! । 'सवितानहरे!' सवितानः–ससन्तानो हरिर्यस्मात् । 'अक्षमोह!' मनोहर! । 'कान्तारवारणसमान!' कं–सुखं अन्तयति कान्तं यत् आरं–अरिसमूहः तद्वारणे साहङ्कार!। जय त्वम् । 'आद्यदेव!' श्रेष्ठक्रीड! । धर्मार्थकामपालक! । 'महोदयवीरधीर!' मोक्षगतिदक्ष! ' उज्जयन्ते शाम्बप्रद्युम्नयोः सिद्धत्वात् । 'सोमप्रभाव!' आह्लादक! । 'परमागमसिद्धसूः' प्रकृष्टा मा–श्रीस्तस्यां अः–विष्णुस्तस्य गमः–अभिगमस्तेन सिद्धा सूः–उत्पत्तिर्यस्य ॥ ४९ ॥

१ °ऋतुकान्तकः° प्रत्य० ।

अथ स्फुरत्प्रभाचक्रं चक्रम्—

हे 'सार !' चक्र !, सह अरैर्वर्तते । 'कल्याण !' श्रेष्ठ ! । 'सवितानहरे !' सवितानः—सराज्यविस्तारः हरिः—विष्णुर्यस्मात् । 'क्षमोह !' क्षमां—पृथ्वीं साधनार्थं ऊहयति । 'कान्त !' भास्वर ! । 'आरवारणसमान !' अरिसमूहव्यपोहेन सपूज ! । जय त्वम् । 'आद्यदेव !' आद्यो—मुख्यो देवो—विजिगीषा यस्मात् । 'धर्मार्थकामदमहः' धर्मार्थकामदं महः—तेजो यस्मात् । 'अदय !' रिपुकण्ठच्छेदे निर्दय !। 'वीरधीर !' वीराणां—भटानां धियं—बुद्धिं ईरयति । 'सोमप्रभाव !' सत्कीर्त्तिप्रताप ! ।'परमागमसिद्धसूरे !' परेषां मा—श्रीस्तस्या आगमे—लाभे मन्त्रसिद्धाचार्य ! ॥५०॥

अथ शब्दमात्रविसूत्रितशत्रुजन्यः पाञ्चजन्यः—

हे 'सारस !' शङ्ख ! । 'कल्याण !' श्रेष्ठ !, पाञ्चजन्य इत्यर्थः । 'वितानहरे !' विशिष्टविस्तारो हरिः—वासुदेवो यस्मात् । 'अक्षमोह' समरे परचक्रस्य चैतन्यहर ! । 'कान्तारव' तेषां कमनीयः परेषां सुखान्तकः आरवः—शब्दो यस्य । 'अरण !' असङ्ग्राम !, ध्वानेनैव समरपूरणत्वात् । 'समानजयाद्यदेव !' मानखण्डनयुक्ता आद्यदेवाः—दानवा यस्मात् । 'धर्मार्थकामदमहोदय !' धर्मार्थकामप्रदाभ्युदय ! । 'वीरधीर !' वीराणां धियं ईरयति । 'सोमप्रभ !' चन्द्रोज्ज्वल ! । 'अव' रक्ष । 'परं' आत्मव्यतिरिक्तं जनं मा वधीः, तव चन्द्रोज्ज्वलस्य परहननमनुचितमित्यर्थः । 'आगमसिद्धसूरे !' आ—लक्ष्मीस्तस्या आगमो—लाभस्तत्राज्ञासिद्धाचार्य ! ॥ ५१ ॥

अथ प्रशमिताशिवः शिवः—

हे 'सोम !' उमापते ! 'कल्याणसारसवितानहर !' कल्यो—दक्षः, कल्य इत्यागः—शब्दनं यस्येति,पङ्क्तिरथन्यायात् कल्याणशब्देन दक्षः—प्रजापतिः तस्य सारा—श्रेष्ठा मा—श्रीर्यत्र तत् सारसम् यद्वितानं—मखस्तद् हरति । 'ईक्षमोह !' ईक्षाः—द्रष्टारः तान् मोहयति—रञ्जयति, सुरूपत्वात् । 'कान्तार !' कं—जलं अन्तः—स्वरूपं यस्याः सा अर्थाद् गङ्गा तां इयर्ति; यद्वा कं—मस्तकं तस्यान्तः—अवयवः तं इयर्त्ति—प्राप्नोति कपाली इत्यर्थः । 'वारगसमान !' वारगो—गजासुरस्तं स्यति यः तादृशो मानः—अहङ्कारो यस्य । 'आद्यदेव !' सर्वसुरज्येष्ठ !। 'धर्मार्थ !' धर्मः—धनुः प्रस्तावात् पिनाकं तस्माद् अर्थः—दानववधरूपो यस्य । 'कामद !' स्मरखण्डक !। 'महोदय !' महोन्नते ! । 'वीर !' शूर !, अन्धकादिध्वंसात् । 'धीर !' धैर्ययुक्त !। 'प्रभाव !' परममाहात्म्य !। प्रकृष्टागम ! सर्वव्यापित्वात् निःक्रिय ! । 'सिद्धसूरे !' सिद्धानां अणिमादिसिद्धिभाजां सूरे !—आचार्य ! ॥

अथ हरहृदयहरणचौरी गौरी—

कदाचिद् गङ्गाभिगमपराय हराय चुक्रोध देवी, ततः किमप्येषा करिष्यतीत्यधीरतां प्रपेदे देवः, देव्यपि साधिक्षेपमात्मानं निदर्शयन्ती तं प्रत्याह—'रे आद्यदेव !' सुरमुख्य ! । 'अधीर !' कातर ! । 'कल्याणस !' कल्याणं स्यति । 'अरस !' नीरस ! । 'वितानहर !' दक्षमखमथन ! । 'ईक्षमोह !' ईक्षणात् मोहः—स्नेहो यस्य । जया—गौरी, "जयोमा तत्सखी तिथिः" ( हेम्यने. २–३५२ )

इति पाठात् । 'अगमसिद्धसूः' यथा न गच्छतीत्यगः—शैलः तथा नास्ति गमः—चलनं यस्येति व्युत्पत्त्या अगमः—शैलः तस्मात् सिद्धा सूः—प्रसवो यस्याः सा । 'कान्तारवारणसम !' कं—जलं अन्तः—स्वरूपं यस्याः सा कान्ता—गङ्गा तस्यां आरः—अभिगमस्तद्वारणे समा—सश्रीका । 'सोमप्रभौ' सोमोपलक्षिते प्रभौ—भर्त्तरि भवल्लक्षणे 'न अपरमा' न अपकृष्टा, किन्तु 'धर्मार्थकामदमहोदयवीः' धर्मार्थकामप्रदं महोदयं—अभ्युदयं वेति—प्रसवाय गर्भत्वेन गृह्णाति इत्यतस्त्वं मा भूः—धीर इति भावः ॥ ५३ ॥

अथ दत्तदैत्यावस्कन्दः स्कन्दः—

'सोमप्रभाव !' स्कन्द !, सह उमया सोमः—शम्भुः तस्मात् प्रभावः—प्रकृष्टोत्पत्तिर्यस्य । 'कल्याणसार !' 'के—वाहनमयूरे लीयत इति कली स चासौ आणसारश्च, आणः—युद्धे दानवाह्वानशब्दस्तेन सार ! । 'सवितानहरे !' विः—करस्थकुक्कुटस्तस्य तानो—विस्तारः हरयश्च—किरणाः सह तैर्वर्त्तते । 'अक्षमोह !' मनोहर ! । 'कान्तारवारण !' कान्तासु—स्त्रीषु आरः—गमनं वारयति ब्रह्मचारित्वात् । 'समानजय !' समाना—साहङ्कारा सपूजा वा जया—गौरी यस्मात् । 'अवदेव !' खण्डितवानेव भवानिति गम्यम् । यथा(द्वा) द्वितीयत्रिके युष्मच्छब्दः । कम् ? 'परमागम्' क्रौञ्चाभिधानप्रकृष्टपर्वतम् । 'धर्मार्थ !' धर्महेतो ! । 'कामद !' स्मरखण्डक ! । 'महोदय !' अभ्युदययुक्त ! । 'वीर !' विक्रान्त ! । 'धीर !' युद्धे शूर ! । 'असिद्धसूरे !' असिद्धः—केनापि कर्तुमशक्यत्वात् निष्पन्नो यस्तारकवधस्तत्र सूरे !—विचक्षण ! ॥ ५४ ॥

अथ प्रतिहतप्रत्यूहकदम्बः हेरम्बः—

हे 'वारणसमान!' गजवदन!। जय त्वम्। 'आवदेव!', हरिहरादिभ्यः प्राक् पूज्यत्वात्; यद्वा आद्यो अदेव!, गौर्या शरीरोद्वर्त्तनमलेन निर्मित इत्युक्तेः। 'कल्याणसार!' भद्रश्रेष्ठ!, प्रत्यूहव्यूहव्यपोहहेतुत्वात्। 'सवितान!' सविस्तार!, लम्बोदरत्वात्। 'हरेक्षमोह!' हरावलोकने मोहः—पितृस्नेहो यस्य। 'कान्तार!' कान्तः—सलीलत्वात् लोके प्रियः आरः—चङ्क्रमणं यस्य। 'धर्मार्थकामदमहोदय!' धर्मार्थकामप्रदाभ्युदय!। 'वीरवीर!' वीरः—कम्पः तस्य धियं ईरयति तत्पूजया प्रयोजनैः निःप्रकम्प!। 'सोम!' सकीर्त्ते!। 'प्रभावपर!' माहात्म्यप्रकृष्ट!। 'मागमसिद्धसूरे!' श्रीसमागमनमन्त्रसिद्धाचार्य! ॥ ५५ ॥

अथ गुरुकृतगौरीगिरीशविलासः कैलासः—

'परमाग!' प्रकृष्टगिरे! प्रस्तावात् कैलास!। 'कल्याणसार!' भद्रश्रेष्ठ!। 'सवितानहरे!' वयः—शकुनयः शुककोककोकिलकलापिकलविङ्कायास्तेषां तानो—विस्तारः। हरयश्च—वायवः सिंहमर्कटा वा सह तैर्वर्तते। 'अक्षमोह!' मनोहर!। यद्वा 'सवितानहर!' सवितानः—गौरीगणादिपरिवारविस्तारवान् हरः—शङ्करो यत्र। 'ईक्षमोह!' दृष्टमनोहर!। 'कान्तारवारणसमान!' कान्तारैः—काननैः वारणैश्च—गजैः समान!—साहङ्कार!। जय त्वम्। 'आवदेव!' आवो देवः—क्रीडा यत्र। धर्मार्थकामद!, तत्रगतानामेतत्त्रितयसिद्धेः। 'महोदय!' महान् उदयः—उच्छ्रयो यस्य

'वीरधीर !' वीराणां—रावणादीनां धियं—हराराधनबुद्धिं ददाति। 'सोमप्रभाव !' चन्द्रप्रभां अवति—वर्द्धयति स्वकान्तिभिः स्फटिकमयत्वात् 'मसिद्धसूरे !' मात्—हरात् सिद्धाः—अणिमादिसिद्धिभाजः सूरयः—अध्यात्मकोविदाः प्रमथाः—पार्षदा गणा यत्र ॥ ५६ ॥

## अथ नव ग्रहाः ।

तत्र प्राक् ककुप्कान्ताकर्णपूरः सूरः—

'हे हरे !' सूर्य !। 'कल्याण !' कल्यं—प्रत्यूषं तत् आगयति—आह्वयति। 'सारसवितान !' सारसानि—पद्मानि वितनोति—विकासेन विस्तारयति। 'अक्षमोहकान्तारवारणसमान !' इन्द्रियान्ध्यकाननकरिसम !, निद्रान्धकारध्वंसकत्वात्। जय त्वम्। 'आद्यदेव !' प्रातस्त्वमेव देवो दृश्यसे, त्वदुद्योतिते भुवने शेषा देवा दृश्यन्ते इति। 'धर्मार्थ !' धर्महेतो !—सर्वधर्मकार्यप्रवर्तक !। 'कामदमह !' कामाः—वाञ्छितार्थास्तत्प्रदा महाः—उत्सवा यस्मात्। 'उदयवीः !' उदयः—उदयपर्वतः उद्गमो वा तं वेति—गच्छति, "वींक् गतिप्रजननकान्त्यसनखादने" इत्यस्य। 'अधीरसोमप्रभाव !' अधीरः—कातरः सोमस्य—चन्द्रस्य प्रभावः—स्फूर्तिर्यस्मात्, सूर्योदये चन्द्रस्य प्रभावो नश्यतीत्यर्थः। 'परमागमसिद्धसूरे !' परा—प्रकृष्टा मा—लक्ष्मीस्तस्या आगमः—लाभस्तेन सिद्धाः—प्रख्याताः सूरयः—पण्डिता यस्मात् ॥ ५७ ॥

अथ मन्मथैकजनास्ततन्द्रः चन्द्रः—

'सोम !' चन्द्र !। 'कल्याण !' श्रेष्ठ!। 'सारसवितानहर !'

पद्मविकासनाशक ! । 'ईक्षमोह !' इः—कामः तज्जनने क्षमा ऊहाः—वितर्का यस्मात् । 'कान्तारवारणसमान !' कान्ताः—कमनीयस्त्रियः तासां आरः—स्वैरविहारस्तस्य वारणे समान !—सदर्प !, चन्द्रोदये प्रकाशभिया न सञ्चरन्ति स्वैरिण्य इत्यर्थः । जय त्वम् । 'आद्यदेव !' आद्यो देवः—क्रीडा यस्मात् । 'धर्मार्थकामद !' त्रिवर्गप्रद !, विशिष्टचन्द्रबलेन त्रिवर्गसिद्धिर्भवतीत्यर्थः । 'महोदय !' महान् उदयो यस्य । 'वीरधीर !' वयः—पक्षिणः तेषां ईरे—गमने धियं राति, ते हि चन्द्रोदये रात्रौ दिनभ्रान्त्या सञ्चरितुमिच्छन्ति । 'अपरमागमसिद्धसूरे !' सूरे—सूर्ये प्रभवति । 'अपरमागमसिद्ध !' अपगतो रमायाः—श्रियः आगमो यस्य स चासौ सिद्धश्च निःश्रीक इति ख्यातः ॥ ५८ ॥

अथोपहतलोकचक्रः वक्रः—

हे 'आर !' मङ्गल ! । 'कल्याणसाः' कल्याणं—मङ्गलं स्यति । 'रसवितानहर !' रसाः—घृतादयस्तेषां वितानः—विस्तारस्तं हरति । यदुक्तम्—

'सणि आइच्चि अहव भूनंदणि ककि मयरि रवि अणहि दंसणि ।
तणरसधन्न महग्घ करावइ अहवा नरवइ चक्कि चडावइ ॥'

( )

'ईक्षमोह !' ईक्षणं ईक्षस्तेन मोहयति, लग्नादौ मङ्गलदृष्टिर्वैचित्र्यं जनयति जनानाम् । 'कान्त !' कं—पानीयं अन्तयति वृष्टिविबन्धकत्वात् । क्व ? 'सूरे' सूर्ये इत्यर्थः । 'वारणसमान !' सकलशुभकार्यनिषेधे सदर्प ! । अत एव 'आद्यदेव !' आदित एव

अस्तुत्य !। जय इत्युपहासे। 'धर्मार्थकामद !' धर्मार्थकामखण्डक !। 'महोदयवीरधीः !' महोदया—उत्साहवती वीराणां धीः—युद्धबुद्धिर्यस्मात्। 'असोमप्रभावपरम !' अकोर्त्तिप्रभावप्रकृष्ट !। 'आगमसिद्ध !' आगमः—आगमनं तत्र ख्यात !—प्रसिद्ध !, मङ्गले ग्रामादौ न गन्तव्यम्। यदुक्तम्—

" मंगलवारिं ससिवयणि ! पिउहं वाह न मेल्हि।
होइसइ पच्छुतावडउ माणिकि ठउलु म खिल्हि ॥ "
( )

**अथ सर्वसौम्यः सौम्यः—**

हे 'सूरे !' पङ्क्तिरथन्यायेन बुध !। 'सोमप्रभाव !' सोमात्—चन्द्रात् प्रकर्षेण भावः—उत्पत्तिर्यस्य। भद्राम्भोजवनरवे !। 'अक्षमोहकान्तारवारणसमान !' अक्षवैचित्यकाननकरिसम !। जय त्वम्। 'आद्यदेव !' श्रेष्ठद्युते !। 'धर्मार्थकामद !' त्रिवर्गप्रद !, "मूर्त्तौ बुधगुरुशुक्राः श्रेष्ठाः" इत्युक्तेः। 'महोदयवीर !' महाः—उत्सवास्तेषां उदये शूर !। 'धीर !' बुद्धिप्रद !। 'परमागमसिद्ध !' परमः—प्रकृष्ट इति आगमे—ज्योतिषे सिद्धः ॥ ६० ॥

**अथ शतमखमनोऽभ्युचितधिषणः धिषणः—**

हे 'सूरे !' गुरो !। 'कल्याणसारसवितानहरे !' सवितानः—साध्वरः स चासौ हरिश्च, पूर्वं शतं क्रतून् कृत्वा शक्रः किलाभूदिति, कल्याणसारः—भद्रश्रेष्ठः सवितानहरिर्यस्मात्। 'अक्षमोह !' अक्षाणि मोहयति, नास्तिकमतप्ररूपकत्वात्। अत एव 'कान्तारवारणसमान !' कान्ताः—स्त्रियस्तासु आरः—गमनं तस्य-वारणम् "वृञ् सम्भक्तौ" इत्यस्य णिगन्तस्य भाजनं—सेवापनमित्यर्थः तेन सदर्प !। जय त्वम्। 'आद्य-

देव !' देवमुख्य !, तदाचार्यत्वात् । 'धर्मार्थ !' धर्मनिर्वर्तक! । 'कामद!' कामं–स्मरं दयते " सुदयष्टियच्चयः परमपुरुपार्थः " (         ) इत्युक्तेः । 'महोदयवीर !' महोदयः–मोक्षस्तं विशेपेण ईरयति–निराकरोति । 'धीर !' बुद्धिप्रद ! " विद्यारम्भे गुरुः श्रेष्ठो " (नारचन्द्रे) इत्युक्तेः । 'सोमप्रभाव !' आह्लादक! शुभग्रहत्वात् । 'परमागमसिद्ध !' परेषां मा–श्रीस्तस्या आगमे–लाभे सिद्ध! "यात्रायां जयदो गुरुः" (         ) इत्युक्तेः ॥६१॥

अथ भुवनोपनीतकाव्यः काव्यः—

'हे सूरे !' गुरो !, दैत्यानामिति विशेपणाद् गम्यम् । 'समानजयाद्यदेव !' समानजया–मानजयाभ्यां युक्ता आद्यदेवाः–असुरा यस्मात् । 'कल्याणसारसवितानहरे !' कल्याणसारसः–भद्रसारान्तकृत् विताने–मखे हरिर्यस्य, यज्ञे बलिदानावसरे कनकालुकानालप्रविष्टस्य वामनरूपेण हरिणा कुशाग्रेण चक्षुः स्फोटयित्वा कल्याणसर्वस्वमपनीतमिति श्रुतेः। 'अक्षमोहकान्तारवारण!' अक्षः–व्यवहारस्तन्मोहनवनगज !, प्रवर्तितनिःसन्देहनीतिशास्त्रत्वात् ।'धर्मार्थकामदमहोदय!' देवताप्रतिष्ठाव्रतारोपाद्यो धर्मदाः, रिपुविजययात्रादयोऽर्थदाः, विवाहादयः कामदाः, महाः–उत्सवा यत्र स तादृशः उदयो यस्य । 'वीरधीर!' वीरान्–असुरभटान् धीरयति । 'सोम!' शुभग्रह इति सत्कीर्त्ते ! । 'प्रभाः' कर्मतापन्नाः । 'वप' आरोपय । देवताप्रतिष्ठादौ तद्बलत्वेन प्रभासम्भवात् । 'रमागमसिद्ध !' रमा–श्रीस्तस्या आगमे–लाभे

ख्यात ! "सुक्के वा लिज्जंते भंडं लाभं वरं देइ" (        )
इति ॥ ६२ ॥

**अथ शुभकार्यशैलाशनिः शनिः—**

'सिद्ध !' निष्पन्न ! । क्व ? 'सूरे' सूर्ये, तत्पुत्रत्वात् । 'कल्याणसाः' भद्रान्तकृत् । 'रसवितानहरेक्ष !' रसः—उत्साहस्तस्य वितानहरः-विस्तारहारी ईक्षः—ईक्षणं यस्य, शनिदृष्टस्य लग्नस्याशुभत्वेनोत्साहभङ्गकारित्वात् । 'मोह !' वैचित्यजनक ! । 'कान्तारवारणसमान !' कान्तानां—कमनीयवस्तूनां आरः—आगमनं तद्वारणे साहङ्कार ! । जय इत्युपहासे । 'आद्यदेव !' आदित एवाऽस्तुत्य ! । धर्मार्थकामखण्डक!, "शनौ धनुर्मीनगते पृथिव्यां सर्वप्रजा क्लेशकदर्थिता स्यात् । (                    ) इत्युक्तेः । 'महोदयवीरधीः' अभ्युदयिकम्पनबुद्धे ! । 'असोमप्रभाव !' अनाह्लादक ! 'परमागम !' परमः—प्रकृष्टो गमः—गतिर्यस्य, पङ्गुत्वात् ॥ ६३ ॥

**अथ सकलजगदरुन्तुदः विधुन्तुदः—**

हे 'कान्त !' कं—मस्तकं अन्तः—प्रान्तः शेषं यस्य स राहुरित्यर्थः । 'वितानहरे !' वितानः—विगतदीप्तिविस्तारः तुच्छो वा हरिः—आदित्यो यस्मात् । 'कल्याणसारस !' कल्याणसाः—भद्रान्तकः रसो अर्थात् सुधारसो यस्य, सुधापानोद्यतस्य[तस्य]मुर्द्धच्छेदात्। 'अक्षमोह !' मोहकारणान्ध्यजनक ! तमोरूपत्वात् । 'आरवारणसमान!' अरिसमूहनिषेधे सदर्प ! । जय इत्युपहासे । 'आद्यदेव !' आद्या भक्त्या देवा यस्य । धर्मार्थकामखण्डक ! क्रूरग्रहत्वात् । 'महोदय-

---

१ ° उपहस्यते ° क ।

वीरधीर !' अभ्युदयकम्पनदक्ष !। 'सोमप्रभावपरमागमसिद्धसूरे !' सोमः—चन्द्रः तस्य प्रभावः—माहात्म्यं तस्य परमा—प्रकृष्टा श्रीः तस्या गमः—व्यपगमस्तत्र सिद्ध !—पण्डित ! ॥ ६४ ॥

अथाकुशलकलापहेतुः केतुः—

हे 'प्रभाव !' शिखिन् ! "शिखाप्रभारश्मयः समानार्थाः" (हला. अभि. र. मा. १–६५) इति पाठात्, प्रभां–शिखां अवति–पालयति, मत्वर्थीयार्थः धातुनैवोक्तः; यद्वा प्रभया–शिखया अवति–हिनस्ति नृपादीन्; यद्वा अवति–दहति पृथ्वीं प्रभावः अर्थात् केतुः। 'कल्यागसाः' भद्रान्तक !। 'रसवितानहरेक्ष !' रसस्य–अनुरागस्य शृङ्गारादेर्दुग्धदध्यादेर्वा वितानः–विस्तारः तं हरति रसवितानहरः ईक्षः–अवलोकनं यस्य। मा निषेधे। जय त्वम्। 'ऊह!' अवतीति ऊः–राजामात्यादिस्तं हन्ति"क्वचित्"(सिद्ध॰ ५।१।१७१) डप्रत्ययः। 'कान्तारवारणसमान !' कान्तानां–कमनीयवस्तूनां आरः–प्राप्तिस्तद्वारणे सदर्प !। 'आद्यदेव !' आदित एव अस्तुत्य !।'धर्मार्थि!' धर्मनिर्वर्त्तक !। 'कामदमहः !' कामदं–वाञ्छितार्थखण्डकं महः–तेजो यस्य। 'अदयवीरधीः !' अदया–निःकृपा वीरेषु धीर्यस्य, केतूदये युद्धादिसम्भवात्। 'असोम !' अकीर्ते ! क्रूरग्रहत्वात्। 'परमागमसिद्धसूरे !' परा–प्रकृष्टा या मा–लक्ष्मीस्तस्या गमः–अपगमस्तत्र सिद्धसूरे !—सिद्धाचार्य ! ॥ ६५ ॥

## अथाऽष्टौ दिक्पालाः।

तत्र प्रणतत्रिदशचक्रः शक्रः—

हे 'हरे !' शक्र ! 'कल्याणसार !' कल्याणानि–सर्वजिन-

च्यवनादिदिनोत्सवाः तानि सरति—तत्र पूजार्थं गच्छति इत्यर्थः। 'सवितान!' सामानिकत्रायस्त्रिंशत्पार्षद्यादिप्रचुरपरिवारविस्तारसहित!; यद्वा 'सवितान!' समख!, शतमख इत्याहुर्लोकाः। 'अक्षमोह!' अक्षाणि मोहयति कान्तरूपत्वात्। 'कान्तारवारणसमान!' कान्तः—कमनीयः आरः—चङ्क्रमणं यस्य, स चासौ वारणश्च तेन सदर्प!। जय त्वम्। 'आद्यदेव!' देवराज!। 'धर्मार्थकामदमहोदय!' धर्मार्थकामपालकः महोदयः—परमैश्वर्यं यस्य। 'वीर!' पाकादिदानवजयशूर!। 'धीर!' धैर्यगुणयुक्त!। 'सोमप्रभाव!' सकीर्त्ति प्रताप! 'परमागमसिद्धसूरे!' परमागमैः—प्रकृष्टशास्त्रैः सिद्धः—प्रख्यातः सूरिः—बृहस्पतिर्यस्य ॥ ६६ ॥

**अथ तमःपटलदलनः ज्वलनः—**

हे 'क!' अग्ने!, "को ब्रह्मण्यात्मनि रवौ मयूरेऽग्नौ यमेऽनिले। कं शीर्षेऽप्सु सुखे' (हेम्य० १—५) इत्युक्तेः। 'अन्तारव!' अन्तः—मध्ये रवः—धगद्धगिति ध्वनिर्यस्य। 'आरण!' निर्मन्थकाष्ठं अरणिस्तत्र भवः। 'कल्याणसार!' कल्याणं—हिरण्यं तदेव सर्वधातुषु सारम्। अर्थान्तरे तोयस्य 'हिरण्यरेताः' (अभि.२.मा.१।६४) इत्युक्तेः। 'सवितानहरे!' सवितानः—विस्तारकारी हरिः—वायुर्यस्य। 'अक्षमोह!' अक्षाणि मोहयति कान्तरूपत्वात्। 'समान!' सपूज!, विप्रैः प्रत्यहं पूज्यमानत्वात्। जय त्वम्। 'आद्यदेव!' सर्वदेवमुख्य!, "अग्निमुखा वै देवाः' (आश्व. गृ. सू. अ. ४) इति श्रुतेः। 'धर्मार्थकामदमहः' धर्मार्थकामानां पालकं लोकोक्त्या खण्डकं

दाहकशक्त्या महः—तेजो यस्य। 'अदयवीर !' निःकृपेपु शूर ! सर्व-दाहकत्वात्। ' धीर ! ' धियं—वस्तुज्ञानं रातीति। ' सोमप्रभावपर ! ' सोमे—चन्द्रे प्रभावपर !—तेजसा श्रेष्ठ !, रात्रौ दीप्त इत्यर्थः। 'सूरे' सूर्ये सति ' मागमसिद्ध ! ' मा—तेजःश्रीः तस्या गमः—गमनं तेन ख्यात ! ॥ ६७ ॥

अथ जनितजन्तुजातजीवितान्तः कृतान्तः—

हे ' हरे ! ' यम !। ' कल्याणस ! ' भद्रान्तक !। 'अरसवितान ! ' न विद्यते रसवितानः—उत्सारो यस्मात्। अक्षाणि मोहयति तथा यथा तानि न जाग्रति दीर्घनिद्राकारित्वात्। ' कान्त ! ' कं—सुखं अन्तयति कान्तन्। ' आरवारणसमान ! ' आरः—गमनमागमनं च तद्वारणे साहङ्कार !। जय इत्युपहासे। 'आद्यदेव !' आदित एव न देवः—क्रीडादिर्यस्मात्। ' धर्मार्थकामद ! ' त्रिवर्गखण्डक !। ' महोदयवीरधीः ! ' अभ्युदयकम्पनबुद्धे !। 'असोम ! ' अकीर्ते !। ' प्रभो ' स्वामिनि ' सूरे ' सूर्ये ' सिद्ध ! ' निष्पन्न ! तत्पुत्रत्वात्। ' अपरमागम ! ' अपरमः—अशोभनो मृत्युकारित्वात् आगमः—आगमनं यस्य ॥ ६८ ॥

अथ पिशिताशनप्रधानः यातुधानः—

हे ' अपरमागम ! ' अकारात् परा मा—लक्ष्मीः अलक्ष्मीरित्यर्थः तस्याः सकाशात् आगमः—उत्पत्तिर्यस्य। 'कल्याणसार ! ' कल्याणसः—भद्रान्तकः आरः—सञ्चरणं यस्य। ' सवितानहरे ! ' सवितानः—सविस्तारो हरिः—यमो यस्मात्, जनमारणेन यमोपष्टम्भकत्वात्।

'अक्षमोह!' अक्षे–विभीतके मोहः–प्रीतिर्यस्य, "अक्षे राक्षसः" इति वचनात्। यदुक्तम्–"चिह्लीइ वसइ गोरी मूरो लिंबे विही पला- संमि। धत्तूरयंमि रुद्दो अक्खे रक्खो वडे जक्खो॥"( ) 'कान्तारवाः' कान्तारं–अरण्यं वाति क्विप्। 'रणसमान!' युद्धे सदर्प!। जय इत्युपहासे। 'आद्यदेव!' आदित्य पुत्र अस्तुत्य!। 'धर्मार्थकामद!' त्रिवर्गखण्डक!। 'महोदय!' महाकाय!। 'वीरधीर!' वीराणामपि धियं–बुद्धिं ईरयति–कम्पयति भीषणत्वात्। 'सोमप्रभाव!' सोमस्य–चन्द्रस्य प्रकृष्टा भा–रुचिर्यस्यां सा सोमप्रभा अर्थात् रात्रिः तत्र अवति–चरति, क्विप्, 'संयोगान्तस्य' (सार० ) स्लोपे, तस्य तृतीयत्वम्। 'सिद्ध!' "षिधू गत्याम्" भावक्विबन्तः सिद्धं–गमनं जहाति–त्यजति। क्व सति? 'सूरे' सूर्ये, निशाचरतया दिने त्यक्तसञ्चार इत्यर्थः॥ ६९॥

अथ रुचिररत्नाभरणकिरणश्रेण्यरुणः वरुणः—

हे 'व!' वरुण!, "वः पश्चिमदिगीशे स्यादौपम्ये पुनरव्ययम्।" (हैम्य० १–१४) इति पाठात्। 'कल्याणसारसवितानहरे!' कल्याणसारसं–कनककमलं तस्य वितानः–विस्तारः स इव अल्पतेजा हरिः–सूर्यो यत्र। 'अक्षमोह!' मनोहर!। 'कान्तार!' कं–जलं तस्यान्तः–स्वरूपं समीपं वा तं इयर्ति जलाधिदेवत्वात्। 'आरण- समान!' आ–समन्तात् रणः–समुद्रघोषः तेन सदर्प!। जय त्वम्। 'आद्यदेव!' श्रेष्ठक्रीड!। 'धर्मार्थकामद!' त्रिवर्गपालक!। 'महोदय- वीरधीर!' महोदयः–महोन्नतिस्तस्य वीरः–विशिष्टकम्पस्तत्र धीर!–

दक्ष !। क्व विषये ? 'सोमप्रभौ' सोमः—चन्द्रः स एव प्रभुस्तत्र। वरुणं प्राप्य न केवलं सूर्योऽल्पतेजा जायते चन्द्रोऽप्यस्तमयतीत्यर्थः। 'अपरमागमसिद्धसूरे !' अपरा—पश्चिमा तस्या मा—श्रीः तस्या गमः—अभिगमस्तत्र सिद्धसूरे !—सिद्धाचार्य ! ॥ ७० ॥

अथान्दोलितपादपवनः पवनः—

हे 'हरे !' वायो !। 'कल्याणसार !' भद्रश्रेष्ठ !। 'सवितान !' सविस्तार !। 'अक्षमोहकान्तारवारगसमान !' अक्षमूर्च्छारण्यगजसम !, मूर्च्छानिवर्तकत्वात्। जय त्वम्। 'आयदेव !' श्रेष्ठगते !। 'धर्मार्थकामद !' त्रिवर्गपालक !, वायुरूपप्राणाभावे तदभावात्। 'महोदयवीरधीर !' महोदया—उन्नतिमन्तो वृक्षाद्यास्तेषां वीरः—विशिष्टकम्पस्तत्र धीर !—दक्ष !। 'सोम' सोम इत्यपरनामन् !। 'प्रभावपरमागमसिद्धसूरे !' प्रभावाः—प्रकृष्टाः कुसुमकर्पूराद्याः पदार्थास्तेषां परमा—प्रधाना सौरभ्यश्रीस्तस्या आगमः—आगमनं तत्र सिद्धाचार्य ! ॥७१॥

अथार्थदानभवणः वैश्रमणः—

हे 'सोम !' किन्नरेश्वर !। 'कल्याणसारसवितान !' कल्याणं—स्वर्णं सारं—धनं ताभ्यां सवितान !—सविस्तार !। 'हरेक्षमोह !' हरः—श्रीकण्ठः तस्य ईक्षः—दर्शनं तत्र मोहः—स्नेहो यस्य। 'श्रीकण्ठसखा' (हला. अभि०रत्नमाला, १-७८) इत्युक्तेः। 'कान्तारवारणसमान !' कान्तारे ! चङ्क्रमणं यस्य ईदृग् वारणः—सार्वभौमदिग्गजः तेन सदर्प !। जय त्वम्। 'आयदेव !' श्रेष्ठक्रीड !। 'धर्मार्थकामद !' त्रिवर्गप्रद !, अर्थदानेन धर्मकामावपि ददातीत्यर्थः। 'महोदयवीर !'

महाः—उत्सवास्तेषां उदयः तत्र वीर !—शूर !। 'धीर' ! बुद्धिप्रद !, धनदानात्, 'सर्वशून्यं दरिद्रता' इत्युक्तेः। 'प्रभावपर !' माहात्म्यश्रेष्ठ !। 'मागमसिद्धसूरे !' 'मा—श्रीस्तस्या आगमे—लाभे मन्त्रसिद्धाचार्य ! ॥ ७२ ॥

ईशानः पूर्वमुक्तस्ततोऽत्र मुक्तः।

अथाऽलङ्कृतविजयन्तः जयन्तः—

हे 'जय !' "जयो जयन्ते विजये" ( हैम्य. २–३५२ ) इति पाठात्। 'कल्याणसार !' भद्रश्रेष्ठ !।' सवितानहरे !' सवितानः—ससन्तानो हरिः—इन्द्रो यस्मात्।'अक्षमोह !' मनोहर!। 'कान्तारवारणसमान !' कं—सुखं अन्तयति यत् आरं—अरिसमूहः दानवचमूलक्षणस्तद्वारणे समान !—सदर्प !। 'आवदेव !' श्रेष्ठक्रीड !। 'धर्मार्थकामद !' त्रिवर्गपालक !। 'महोदय !' महोन्नते !। 'वीर !' विक्रान्त !। 'धीर !' असुरसमरे स्थिर !। 'सोमप्रभ !' आह्लादक !। 'अव' रक्ष। 'परम्' प्रणतिपरम्। 'आगमसिद्धसूरे !' आगमैः—शास्त्रैः सिद्धआख्यातः सूरिर्यस्य तस्य गुरुर्विद्यागुरुरित्यर्थः ॥ ७३ ॥

अथ प्रथितपृथ्वीप्रमोदः पयोदः—

हे 'देव !' जलधर !। यदुक्तम्—"देवं हृषीके देवस्तु तोयदे नृपतौ सुरे।" ( हैम्य० २–५१४। 'कल्याण !' कल्यः—कर्णकोटरविपाटनपटुः आणः—गर्जितध्वनिर्यस्य। 'सारसवितानहर !' कमल-

---

१ सम्पूर्ण पद्यं त्वेम्—अपुत्रस्य गृहं शून्यं दिशः शून्या विबान्धवाः। मूर्खस्य हृदयं शून्यं सर्वशून्यं दरिद्रता ॥

वनवितानविनाशक !। 'ईक्षमोह !' ईक्षा:—द्रष्टारस्तान् मोहयति मनोहरत्वात् । 'कान्तः ! ' कं—जलं अन्तः—मध्ये यस्य । 'रवारणसमान !' रः—वह्निः, "रस्तीक्ष्णे दहनेऽपि च" (हैम्य.१–११) इति पाठात्, तस्य वारणे समान !—सदर्प ! । 'आद्य !' सकलजगद्वर्त्तने । 'धर्मार्थकामद !' त्रिवर्गपालक !। 'महोदय !' महोन्नते !। 'वीरधीर !' वीराणां—भटानां धियं ईरयति, रिपुविजयार्थं देशान्तरगतानां तेषां मेघदर्शनात् मनः क्षुभ्यति इत्यर्थः । 'सोमप्र !' सोमं—जलं प्राति—पूरयति । 'भावपर !' भावाः—पदार्थास्तेषु पर !—प्रधान ! । 'मागमसिद्धसूरे ! ' मा—धान्यादिलक्षणा लक्ष्मीः तस्या आगमः—प्राप्तिस्तत्र आज्ञासिद्धाचार्य ! ॥ ७४ ॥

अथ कृतविवेकवैकल्यं कल्यम्—

हे ' कल्य ! ' मद्य ! ' आणसार ! ' आणः—शब्दस्तेन सारं—प्रकृष्टं करोति, णिच् क्विप्, यः प्राक् मितभाषी सोऽपि मद्यपानाद् असम्बद्धं बहु ब्रूते इत्यर्थः । 'असवितानहरे !' न सवितानः—सविस्तारो हरिः—विष्णुर्यस्मात् । मद्यमत्तकुमारप्रकोपितेन द्वैपायनेन द्वारिका दग्धा इत्यागमात् । 'अक्षमोह !' करणवैकल्यजनक!, यद्वा अक्षमः—क्षान्तिरहितः ऊहो वितर्को यत्र । ' कान्तारवारण ! ' कान्तः—कमनीयो आरः—चङ्क्रमणं तद्वारण !, विश्रृङ्खलपदन्यासहेतुत्वात् । ' समान ! ' साहङ्कार !, अहं राजा इत्याद्युक्तियुक्तत्वात् । जय इत्युपहासे । ' आद्यदेव ! ' आदित एवाऽस्तुत्य ! । 'धर्मार्थ !' धर्मनिर्वर्तक ! । 'कामद !' स्मरोद्दीपक ! । ' महोदयवीरधीर !' महोदयाः—उन्नतिमन्तस्तेषां वीरे—विशिष्टकम्पने धियं राति । ' सोमप्रभाव ! ' सोमात्—ज-

लात् प्रभाव—उत्पत्तिर्यस्य । 'परमागमसिद्धसूरे !' प्रकृष्टलक्ष्म्या अपगमे मन्त्रसिद्धाचार्य ! ॥ ७५ ॥

**अथ वाञ्छितार्थजनकं कनकम्—**

हे 'कल्याण !' सुवर्ण ! सर्वधातुश्रेष्ठ ! । 'सवितानहरे !' सविस्तारा हरयः—तुरङ्गमा यस्मात् । 'अक्षमोह !' इन्द्रियानन्दक ! । 'कान्तार !' कान्ताः—कामिन्यस्तासां आरः—प्राप्तिः तं करोति, णिच् अच् । 'वारणसमान !' वारणैः—गजेन्द्रैः समान !—सपूज ! । जय त्वम् । 'आद्यदेव !' आद्यः—श्रेष्ठो देवः—क्रीडादिर्यस्मात् । 'धर्मार्थकामद !' त्रिवर्गपालक ! । 'महोदय !' महाः—उत्सवास्तेषां उदयो यस्मात् । 'वीरधीर !' वीराः—सुभटास्तान् धीरयति—सुवर्णलाभाद् योधा युद्धे धैर्यं भजन्तीत्यर्थः । 'सोम !' सकान्ते !, "उमा गौर्यां हरिद्रायां कीर्त्तिकान्त्यतसीष्वपि" (हेम्य० २—३०९) इति पाठात् । 'प्रभाव !' प्रकृष्टपदार्थ ! । 'परमागमसिद्धसूरे !' प्रकृष्टलक्ष्म्या आनयने सिद्धाचार्य ! ॥ ७६ ॥

**अथाऽनुल्लङ्घितावधिमुद्रः समुद्रः—**

हे 'कान्त !' समुद्र ! । कं—जलं अन्तः—मध्ये यस्य । 'कल्याणसारस !' कल्याणाः—पटुशब्दाः सारसाः—पुष्कराख्या यत्र; यद्वा सरसां समूहः सारसं, कल्याणं—उत्कृष्टं सारसं यत्र, 'सरस्वान्' (अभि. २. मा. ३।३०) इति प्रसिद्धेः । 'वितानहरे!' वितानो—मन्दः निद्रायमाणत्वात् हरिः—केशवो यत्र । 'अक्षमोह !' भयावहत्वात् करणमूर्छाजनक ! । 'रवारणसमान !' रः—सर्ववह्निस्तद्वारणे विध्यापने सदर्प ! । जय त्वम् । 'आद्यदेव !' आद्यः

श्रेष्ठः देवः–अधिष्ठायकसुरो यस्य । 'धर्मार्थकामद !' त्रिवर्गप्रद ! अर्थदानात् तत्कार्ययोर्धर्मकामयोर्दायकत्वात् । 'महोदयवीः !' महोदयं–वीरोच्छ्वं वेति–गच्छति । 'अधीर !' सक्षोभ ! चन्द्रोदये वेलां गृह्णातीत्यर्थः । 'सोमप्रभाव !' सोमस्य–चन्द्रस्य प्रभावः–उत्पत्तिर्यस्मात् । 'परमागमसिद्धसूरे !' परा–प्रकृष्टा मा–श्रीस्तस्य आगम–उत्पत्तौ सिद्ध !–कोविद ! ॥ ७७ ॥

अथ जगद्व्यापादनासक्तनखशुक्तिमुक्तालङ्कृतकाननः पञ्चाननः—

'हे हरे !' सिंह ! 'कल्याणसार !' कल्यः–सकलापरव्यापद्पाटनपटुर्यः आणः–शब्दस्तेन सार !–श्रेष्ठ ! । 'सवितान !' सकेसरविस्तार ! 'अक्षमोह !' अक्षमां–क्रोधं ऊहते । 'कान्तारवारणसमान !' कान्तारवारणाः–अरण्यगजास्तान् स्यति यस्तादृशो मानो–दर्पो यस्य । जय त्वम् । 'आयदेव !' श्रेष्ठजिगीष ! । 'धर्मार्थकामद !' वधप्रधानत्वेन आत्मनः परस्य वा त्रिवर्गखण्डक ! । 'महोदय !' महोत्साह ! । 'वीर !' विक्रान्त ! । 'धीर !' परैरक्षोभ्य ! । 'सोमप्रभाव !' सकीर्तिप्रताप ! । 'परमागम !' परमा–प्रकृष्टा अगम्यगिरेरगानां–वृक्षाणां वा मा–श्रीर्यत्नात् । सिंहत्रासात् तरुगत्व्यादिप्राकृतलोकसञ्चाराभावेन गिरेस्तरूणां च अक्षतत्वमिति । 'सिद्धसूर !' मृगादिव्यापादने सिद्ध !–पण्डित ! । यद्वा 'परमागमसिद्ध !' जिनागमे प्रसिद्ध ! वाहनत्वेन । क ? 'सूरे' सूर्यमण्डले 'पुरओ वहंति सीहाइ (बृहत्सं० गा. ६५) इति वचनात् ॥ ७८ ॥

---

°१ प्रख्यात !° क ।

अथ चरणसञ्चरणचङ्गः तुरङ्गः—

हे 'हरे!' तुरङ्गम!। 'कल्याणसार!' पञ्चकल्याण! अष्टकल्याण! वा। यदुक्तम्—

"पञ्चभद्रस्तु हृत्पृष्ठमुखपार्श्वेषु पुष्पितः॥
पुच्छोरःखुरकेशास्यैः सितैः स्यादष्टमङ्गलः।"

(अभि. का. ४, श्लो. ३०२–३०३)

'सवितान!' विपुलोरः पृष्ठपार्श्वभाग!। 'अक्षमोह!' मनोहर!। 'कान्तार!' कान्तः—अभिलाषानुरूपः आरः—चङ्क्रमणं यस्य। 'वारणसमान!' वारणे—हस्तिनि समान!—सदर्प! गजमपि जिगीषतीत्यर्थः। जय त्वम्। 'आद्यदेव!' श्रेष्ठीक्रीड!। 'धर्मार्थकामद!' त्रिवर्गप्रद! विभूतिहेतुत्वात्। 'महोदय!' महोन्नते!। 'वीर!' विक्रान्त!। 'धीर! लग्नप्रहारोऽपि स्वनायकं रणाद् बहिर्नयति इति धैर्ययुक्त!। 'सोमप्रभाव!' सोमः—समीरस्तद्वत् प्रभावो—वेगो यस्य। 'परमागमसिद्धसूरे!' परेषां मा—लक्ष्मीः—क्ष्मालक्षणा तस्या आगमे आज्ञासिद्धाचार्य! 'यस्याश्वास्तस्य मेदिनी' ( ) इत्युक्तेः॥ ७९॥

अथ जङ्गमगिरिबन्धुरः सिन्धुरः—

'वारण!' गज!। 'कल्याण!' भद्र! भद्रजाते!। 'सार!' चतुरङ्गसैन्यश्रेष्ठ!। 'सवितान!' सविस्तार!। 'हर' अपनय। कम्? 'परम्' शत्रुम्। 'ईक्षमोह!' दृष्टवैचित्र्यजनक!। 'कान्तार!' कमनीयचङ्क्रमण!। 'समानजयाद्यदेव!' समानाः—सदर्पा ज्याद्या—

जयप्रधाना देवा–राजानो यस्मात् । ' धर्मार्थकामद ! ' त्रिवर्गप्रद !! ' महोदय ! ' महोच्छ्रय !! ' वीरघीर ! ' वीराणां–भटानां धियं–बुद्धिं ईरयति । क्षोभहेतुत्वात् । ' सोमप्रभाव ! ' सकीर्त्तिप्रताप ! । 'आगमसिद्धसूरे ! ' आगमात्–वेदात् सिद्धा सूः–प्रभवो यस्य ' सामोद्भव ' (                    ) इत्युक्तेः ॥ ८० ॥

अथाऽन्तःसुखनिषण्णपद्मं पद्मम्—

हे ' सारस ! ' पद्म ! । ' कल्याण ! ' शुभ ! ' वितानहरे ! ' वितानः–विकाशक्रियायां मन्दः हरिः–शीतांशुर्यस्य । 'अक्षमोह ! ' इन्द्रियानन्दक !। ' कान्तारवारणसमान ! ' कान्तः–मनोज्ञः आरवः–स्वरस्तेन अरणं–भ्रमणं येषां ते कान्तारवारणाः–भ्रमराः । भ्रमति च रौति चेति व्युत्पत्तेः । तैः 'समान ! ' साहङ्कार !। जय त्वम्। 'आद्यदेव !' श्रेष्ठस्तुते !। 'धर्मार्थ ! ' देवतापूजाहेतुत्वात् । ' कामद ! ' कामवृद्धिकर !। 'महोदय !' महान् उदयः–उच्छ्रयो यस्य । अगाधजलोत्पत्तेः । 'वीरधीर ! ' वीराणां–हंसचक्रवाकादिपक्षिणां ई रे–कम्पने गमने वा धियं राति। 'सोमप्रभाव !' सोमे–जले प्रभावः-प्रकृष्टं जन्म यस्य । ' परमागमसिद्ध ! ' परा–प्रकृष्टा मा–विकाशश्रीः तस्या आगमो-लाभस्तेन सिद्ध !–ख्यात !। क्व ? 'सूरे ' सूर्ये सति ॥८१॥

अथ विषमविषदर्पः सर्पः—

हे ' हरे ! ' सर्प ! । ' कल्याणसार ! ' कल्याणं सारयति–गमयति अमङ्गलभूत इत्यर्थः । ' सवितान !' फणाविस्तारयुक्त ! ' । ' अक्षमोह ! ' इन्द्रियात्यन्तमूर्च्छाजनक ! । ' कान्त ! ' सुखान्तक!।

'आरवारण!' गमनविघ्नभूत!। 'समान!' सदर्प!। जय इत्युपहासे। 'आद्यदेव!' आदित एवाऽस्तुल्य!। 'धर्मार्थकामद!' त्रिवर्ग-खण्डक! आत्मनस्तदभावात् परेषां वधकरणात्। 'महोदयवीरधीर!' महा—उत्सवास्तेषां उदयस्तस्य वीरे—विशिष्टकम्पने धीर!—दक्ष!, उत्सवारम्भेष्वहिदर्शने मनःक्षोभात्। 'सोमप्रभाव!' सोमाद्—वायोः प्रभावः—प्रकृष्ट आत्मा यस्य 'पवनाशन' इत्युक्तेः। 'परमागम-सिद्धसूरे!' परेषां मा—जीवनश्रीः तस्या गमे—व्यपगमे सिद्धसूरे!—आज्ञासिद्धाचार्य!॥ ८२॥

**अथ चञ्चुरुचितुलितकिंशुकः शुकः—**

हे 'हरे!' शुक!। 'कल्याणसार!' जय, जीव, नन्द इत्यादि मङ्गलोक्तिप्रधान!। 'सवितान!' सह वीनां—शुकानां तानेन-विस्तारेण। 'अक्षमोह!' मनोहर!। 'कान्तारव!' कान्तः—मनोज्ञोक्ति-युक्तत्वेन कमनीय आरवः—शब्दो यस्य। 'अरणसमान!' अरणं—व्योम्नि सञ्चरणं तेन समान!—साहङ्कार!। जय त्वम्। 'आद्यदेव!' श्रेष्ठक्रोड!। 'धर्मार्थकामद!' तत्कथनेन त्रिवर्गपालक!। 'महोदयवीः' महोदयान्—धनिनः वेति—गच्छति। 'अधीर!' मार्जारभीरो!। 'सोमप्रभाव!' सोमो—लताविशेषस्तस्य प्रभा तां अवति नील इत्यर्थः। 'परमागमसिद्धसूरे!' प्रकृष्टशास्त्रसिद्ध!—विचक्षण! तापसाश्रमेषु तच्छ्रवणात्॥ ८३॥

**अथ विविधश्वापदशरण्यं अरण्यम्—**

हे 'कान्तार!'। 'कल्याणसारसवितानहरे!' कलिः—कलह-

स्तत्र आणसाराः—शब्दप्रधानाः सवितानाः—सविस्तारा हरयः—कपयः सिंहा वा यत्र। 'वारणसमान!' वारणैः—करिभिः समान!—सदर्प!॥ जय इत्युपहासे। 'आयदेव!' आदित एवागतेरशक्यप्रवेशकत्वात्। 'धर्मार्थकामद!' त्रिवर्गखण्डक!, तत्पतितस्य जनस्य त्रिवर्गाभावात्। 'महोदय!' महाप्रमाण!। 'वीरधीर!' वीराणां धियं ईरयति। 'सोमप्रभाव!' सोमानां—दिव्यौषधीनां प्रभां अवति, रात्रौ तत्रौषधयः प्रदीप्यन्ते इत्यर्थः। 'परमागम!' परमा—प्रकृष्टा अगानां—पर्वतानां तरूणां वा मा—श्रीर्यत्र। 'सिद्धसूरे!' सिद्धा—रसादिसिद्धिभाजः सूरयो व्याडिनागार्जुनाद्या यत्र॥ ८४॥

अथ विमलजलविलसदप्सरः सरः—

'हे समान!' सेन—सकारेण अधिकमानः, मान इति शब्दः चतुर्भिरधिकदशवत् मध्यपदलोपी समासः। ततो मानशब्दात् अग्रतः सकारेण मानस इति भवति। कीदृशः? 'कल्याणसारसवितानहरे!' कल्याणसारसानि—कनककमलानि तेषां वितानः—विस्तारस्तेन हरे!—पिङ्गवर्ण!। यद्वा के—जले लीयन्ते कल्यः—हंसचक्रवाकाद्यास्तेषां आणः—शब्दस्तेन सार!—श्रेष्ठ!। 'सवितानहरे!' सवितानः—सकलसुरा[1]सुरपरिवारविस्तारवान् हरिः—इन्द्रो यत्र। तत्र सुरपतिर्जलक्रीडां करोतीत्यर्थः। 'अक्षमोह!' 'मनोहर!' 'कान्तारवारण!' कं—जलं तस्यान्तः—प्रान्तः तं इति इयर्ति कान्ताराः वारणाः—वनगजा यत्र। जय त्वम्। 'आयदेव!' आयो देवः—क्रीडा यस्मात्। 'धर्मार्थकामद!' तत्र स्नातानां सप्तर्षित्रिदशादीनां त्रिवर्गसाधनात्। 'महोदय!' गगनादपि गुरुतर!। 'वीरधीर!' वीनां—राजहंसादीनां ई रे—

१ °सुरासुरपरि° क।

गमने धियं राति । अन्यतोऽनागमने राजहंसा मानसं गच्छन्तीत्युक्तेः। 'सोमप्रभावपरम !' सोमं—जलं तस्य प्रभावेण—नैर्मल्येन परम !—प्रकृष्ट !। 'आगमसिद्धसूरे !' आगमेन सिद्धः—ख्यातः सूरिः—गुरुर्यत्र । यद्यपि शक्रागमनोक्त्या बृहस्पतेरप्यागमनं लब्धं, तथापि तस्य प्राधान्यख्यापनार्थं भेदेन भणनम् । यथा 'ब्राह्मणा आयाता वशिष्ठोऽपि आयातः' ॥ ८५ ॥

अथ जनितरिपुजनोपतापं चापम्—

'हे धर्म !' चाप !। 'कल्याण !' कल्यः—पटुः आणः—टङ्कारध्वनिर्यस्य । 'सारसवितानहरे !' सारं—बलं स्यन्ति सारसाः अर्थाद् वैरिणस्तेषां वितानः तं हरति । 'ईक्षमोह !' ईक्षेण—दर्शनेन मोहयतीति भीषणत्वात् । 'कान्तारवा !' कान्तारं—दुर्गवर्त्म तत्र वानं—गमनं यस्मात् । 'रणसमान !' रणे—युद्धे समान !—सपूज ! । जय त्वम् । 'आद्यदेव !' आद्यजयेच्छ ! । 'अर्थकामदमहोदय !' अर्थकामप्रदो महोदयः—अभ्युदयो यस्मात् । 'वीरधीर! ' वीरं—धानुष्कं धीरयति, यद्वा वीराणां प्रतिभटानां धियं ईरयति । 'सोमप्रभाव !' सकीर्त्तिप्रताप !।' 'परमागमसिद्धसूर !' परेषां मा—लक्ष्मीस्तस्या आगमे मन्त्रसिद्धाचार्य ! ॥ ८६ ॥

अथ [1]विदितानवद्यायुर्वेदविद्यः वैद्यः —

हे 'आमद !' वैद्य !, आमान्—रोगान् द्यति । 'कल्याणसारसवितानहर !' कल्यो—नीरोगो इत्ययं यः आणः—शब्दस्तं स्यति विच् कल्याणसा यो रसवितानः—प्रथमधातुविस्तारः तं हरति ।

---

१ °विविधानवद्या° ख ।

'ईक्षमोह !' ई–लक्ष्मीस्तदुत्पादने क्षम ऊहो यस्य। 'कान्तारवारणसमान!' कं–सुखं तस्यान्तो दुःखं तस्यारः–प्राप्तिस्तद्वारणे समान !–सपूज्‌ !। रोगिणां दुःखनिषेधेतो लोकैः पूज्यत इति भावः। जय त्वम्। 'आर्यदेव !' प्रधानस्तुते !। 'धर्मार्थक !' धर्मं अर्थयते परोपकारकरणात्। 'महोदयवीर !' महोदयं विशेषेण ईर्त्ते–गच्छति, चिकित्साकरणात् प्रभूतं विभवं लभते इति भावः। 'धीर !' साहसिक ! यमादप्याच्छिद्य जनं जीवतीत्यर्थः ! 'सोम' सकीर्त्ते !। 'प्रभावपरमागमसिद्धसूरे !' प्रभावपरमा ये आगमाः–सुश्रुत–चरक–वाहडाद्या ग्रन्थास्तेषु सिद्धसूरे !–प्रख्यातविचक्षण !॥ ८७ ॥

**अथालङ्कृतलङ्कावनावनिः पावनिः:—**

हे 'हरे !' हनुमन् ! 'कल्य !' स्वाम्यादेशकरणदक्ष !। 'आणसार !' ओङ्कारप्रधान !। 'सवितान !' लङ्कावेष्टनातुच्छपुच्छविस्तार !। 'अक्षमोह !' अक्षो–राक्षसविशेषस्तं मोहयति, युद्धे तद्वधात्। 'कान्तारवारणसमान !' कान्ताः–स्त्रियः तासु आरः–गमनं तद्वारणे समान !–सदर्प ! ब्रह्मचारीत्यर्थः। जय त्वम्। 'आर्यदेव !' श्रेष्ठजयेच्छ !। 'धर्मार्थकामद !' धर्माय कामं यति। 'महोदय !' महान् उदयः–उत्पतनं यस्य, फालेन लङ्घितोदधिरित्यर्थः। 'वीर !' एकाकिभट !। 'धीर !' रक्षोभिरक्षोभ्य !। 'सोमप्रभाव !' सोमः–पवनः तरलात् प्रभावः–प्रकृष्टोत्पत्तिर्यस्य। 'परमागमसिद्धसूरे !' परस्य–पुराणपुरुषस्य रामस्येत्यर्थः, मा इव–श्रीरिव मा अर्थात् सीता तस्या आगमे–आने सिद्धसूरे !–सिद्धकोविद !॥

---

१ "निरोधेन" ख।

अथ विषयसुखस्पृपि (?) पितामहः कान्तामहः—

हे 'दमहोदय !' दं–कलत्रं तस्य महं–विवाहोत्सवः तस्योदय ! । 'कल्याणसार !' कल्याणानि–दधिदूर्वाक्षतादीनि मङ्गलानि तैः सार !। 'सवितान !' चन्द्रोदयमण्डितमण्डप ! यद्वा यज्ञयुक्त !। 'हरेक्षमोह !' हरन्तीति हराः–चौरास्तेषां ईक्षमा–लक्ष्मीसङ्गता ऊहाः । कथं मया वस्त्राभरणादि ग्राह्यमिति वितर्का यत्र । यद्वा हरे–शङ्करे अक्षमोह ! –करणान्तक ! तेनापि कलत्रविवाहस्य कृतत्वात्। 'कान्तारव !' कमनीयः आरवो–धवलतूर्यादिर्यस्य । 'अरण!' कलहरहित !। 'समान!' देवगुर्वादिपूजायुक्त !। जय त्वम् । 'आवदेव!' श्रेष्ठक्रीड ! । 'धर्मार्थकाम !' धर्मार्थः कामः–स्मरः अभिलाषो वा यत्र । लोके विवाहस्य धर्मरूपत्वात् । 'वीरधीर !' वीरः–पुत्रस्तस्य धियं राति । वीरपुत्रो भविष्यतीति धियं ददातीत्यर्थः । 'सोमप्रभाव !' सकीर्त्तिप्रताप !। 'परमागमसिद्धसूरे !।' परा–प्रकृष्टा मा–श्रीस्तस्यागमे आगमे वा सिद्धसूरे !–मन्त्रसिद्धाचार्य ! ।। ८९ ॥

अथ गुरुचतुष्कमध्यात् प्रवचनप्रभावनोद्भूतभुवनाद्भुतप्रभावकरः श्रीसिद्धसेनदिवाकरः—

'सिद्धसूरे !' सिद्धसेनदिवाकर !। यथा भीमो भीमसेनः तथा सिद्धः सिद्धसेनः, स एव सकलकुमतितिमिरतिरस्कारकरणात् सूरिः–दिवाकरः तत्र 'प्रभौ' प्रभवति 'अपरमागम !' अपकृष्टसिद्धान्त ! 'मा जय–जयवादमवाप्नुहि । सन्मत्यादितर्कसूत्रैरमुना भवन्निराकरणस्य कृतत्वात् । 'कल्याणसार !' कलिः–कलहस्तस्मै आणः–

शब्दस्तेन सार ! वाक्कलहप्रधान ! ' इत्यर्थः । ' सवितान ! ' यज्ञयुक्त !, अनेन वेद आक्षिप्तस्तस्यैवाऽश्वमेघादिविविधाध्वरप्ररूपकत्वात् ' हरेक्ष ! ' हरः ईश्वरस्तं ईक्षते—सकलजगत्कर्तृत्वेन पश्यति । अनेन नैयायिको वैशेषिक आक्षिप्तः । तयोरेव जगत्कर्त्रीश्वराभ्युपगमात् । मा निषेधे प्रागुक्तः । ' ऊहकान्तारवारणसमान ! ' ऊहः—अन्वयव्यतिरेकधर्मवितर्कः स एव कान्तारं—काननं तद्भञ्जने वारणसमान !—गजतुल्य ! । ' आद्यदेव ! ' आदिः—प्रथमः अः—विष्णुर्देवो यत्र, अनेन साङ्ख्य आक्षिप्तः । विष्णुभक्तत्वात् तस्य। ' धर्मार्थ ! ' धर्म एव अर्थो न धर्मी अर्थो—वस्तु यस्य, उपलक्षणं चैतत् । अवयवा एव न अवयवी, गुणा एव न गुणी अर्थ इत्यपि द्रष्टव्यम्। तस्यैव धर्मादिनिषेधेन धर्मादिर्मात्रवस्तुतत्वाभ्युपगमात् ' कामद ! ' दुष्करजपतपोब्रह्मचर्यादिकष्टनिराकरणेन कामान्—इच्छितभोगान् दयते—पालयति । अनेन नास्तिक आक्षिप्तः । नास्तिकस्यैव परलोकवैमुख्येन इहलोकसुखाभिमुखत्वात् । 'महोदयवीरधीः । ' महोदयो—मोक्षः तस्य वीरः—विशेषकम्पनं तत्र धीः—बुद्धिर्यस्मात् । सर्वस्यापि परागमस्य मोक्षविघ्नहेतुत्वात्। 'असोमो' अकीर्ते !, सिद्धसेनदिवाकरेण ध्वस्तप्रतापत्वात् । अयमर्थः—उज्जृम्भितजैनदर्शनकमलाकरे सिद्धसेनदिवाकरे परिस्फुरति न शेषदर्शनखद्योतानां स्फूर्तिरासीत्, किन्तु तत्रास्तं गते । यदुक्तम्—

" स्फुरन्ति वादिखद्योताः साम्प्रतं दक्षिणापथे ।
नूनमस्तं गतो वादी सिद्धसेनदिवाकरः ॥ " ॥९०॥

( प्रभा० वृद्ध० प्र० श्लो० १७४ )

अथ प्रकरणचतुर्दशशतीमन्दाकिनीविनिर्गमहिमाद्रिर्यः हरिभद्राचार्यः—

हे 'हरे !' हरिशब्द ! 'कल्याणसार !' कल्याणं-भद्रं तेन सार ! हरिभद्र इत्यर्थः । 'सवितान !' विविधाध्वरप्रधान ! प्राक् ब्राह्मणत्वात् । 'अक्षमोहकान्तारवारण ! अक्षो—ज्ञानं तत्र मोहो—विपर्यासः स एव कान्तारं—वनं तद्भञ्जने वारण !—कुञ्जर !, चतुर्दशविद्यास्थानान्यधीत्य सर्वसन्देहसन्दोहव्यपोहक्षम ! इत्यर्थः । अत एव 'समान !' साहङ्कार ! । जम्बूद्वीपमध्ये यस्य पठितं नावगच्छामि तस्य शिष्यो भवामीति प्रतिज्ञाय करकलितजम्बूशाखः पुरे पुरे बभ्राम इति श्रुतेः । जय त्वम् । 'आद्यदेव !' आदौ—पूर्वं अः—विष्णुर्देवो यस्य । व्रतात् प्राक् वैष्णवत्वात् । 'धर्मार्थ !' प्रतिपन्नचारित्रधर्म ! 'कामद !' शङ्खवादनपुरस्सरं प्रातर्लोकानां स्वपरशास्त्रसंशयच्छेदरूपान्, मध्यान्हे दुःस्थितानां यथाभीष्टभोजनप्राप्तिरूपान्, अपराण्हे प्रतिवादिनां वादविवादरूपांश्च कामान् ददाति, निःसङ्गस्य भोजनदापनाशक्तिः कथमित्याह—'महोदयवीरधीर !' महोदयः—अभ्युदयस्तस्मै वीरं—विशिष्टगमनं तस्य धीः—बुद्धिस्तां राति । अयमर्थः—सार्थवाहं विनाश्य तस्करैर्नीयमानान् वृषभपृष्ठाधिरूढगोणीमध्यस्थितान् मध्यगोपितरत्नस्वर्णान् मदनपिण्डान् ग्राहयित्वा तस्याऽभ्युदयं चकार हरिभद्रसूरिः । 'सोम !' सत्कीर्त्ते ! चतुर्दशशतीप्रकरण[1]करणेन 'प्रभावपरमागमसिद्ध !' प्रभावपरमः—माहात्म्यप्रकृष्टः आगमः 'चक्किदुगं हरिपणगं' ( आव. नि. गा. ४२१ ) इत्यादि-

---

1. °करणात्° ख ।

सिद्धान्तस्तेन सिद्ध !—निष्पन्न ! गृहीतव्रत ! इत्यर्थः । सम्यक् तदवगमाद् आचार्यपदप्राप्तेः ॥ ९१ ॥

**अथ पट्टतर्कसम्पर्कलम्पटदिक्पटपटिममक्कष्टमतिजितदेवसूरिः श्रीदेवसूरिः—**

हे 'सूरे !' आचार्य !। 'आद्यदेव !' आद्यो देवशब्दो यस्य देवसूरे ! इत्यर्थः । 'कल्याणसारसवितानहरे !' भद्राम्भोजनरवे !। 'क्षमोहकान्तारवारण !' क्षमः—क्षपणः कुमुदचन्द्रदिक्पटस्तस्य । ऊहः—वितर्कः स्त्रीनिर्वाणनिषेधरूपः स एव कान्तारं तद्भञ्जने वारण—गज !। अत एव 'समान !' श्रीसिद्धराजपर्षदि प्राप्तसत्कार !। जय त्वम् ।—जयवादप्राप्त्यवसरस्तवेति भावः । 'धर्मार्थक !' वादजय-तुष्टनृपतेः स्वापतेयप्राप्तावपि निरीहत्वात् । धर्ममेव अर्थयते । 'अमद!' राजपूज्यत्वेऽपि निरहङ्कार !। 'महोदयवीर !' महः—तेजः, दया—कृपा समाहारत्वात् महोदयम् । विशेषेण ईर्ते—गच्छति कृपातेजसी युगपत् एकत्राऽसम्भविनी अपि त्वयि अवस्थिते अतस्त्वं लोकोत्तरोऽसीति ध्वन्यते ! 'धीर !' अक्षोभ्य ! दिक्पटवादावसरे न क्षोभं गत इत्यर्थः ।' सोम !' प्रतिवादिजयविजृम्भितकीर्त्ते!। 'प्रभावपरम !' प्रशमशीलादिप्रभावः क्लिष्टाभिसन्धिरपि मनः प्रासादजननरूपोऽनुभावः तेन परम !—प्रकृष्ट !। आगमसिद्ध !' युगप्रधानागम !॥९२॥

**अथ चौलुक्यचक्रवर्त्तिकुमारपालदेवप्रतिबोधलब्धमहिमाद्भुतभूरिः श्रीहेमचन्द्रसूरिः—**

हे 'कल्याण !' मिथ्यात्वविषघातनाद्यष्टगुणोत्कृष्टत्वेन हेम !।

'हे सोम!' सकललोकलोचनचकोरचक्रलीढकान्तितया चन्द्र!। 'सूरे!' आचार्य!। ततः श्रीहेमचन्द्रसूरे! इत्यर्थः। 'सार!' सकलकोविदश्रेष्ठ!। 'सवितानहर!' सवो—यज्ञः विद्यते येषां ते सविनः—याज्ञिकास्तेषां तानः—पशुविशसनसनाथयज्ञविस्तारः तं हरति, प्रवर्त्तितसर्वसत्वाभयदानपटहत्वात्। 'ईक्ष!' समस्तशास्त्रार्थरहस्यवीक्षक!। 'मोहकान्तारवारण!' मोहो—यथार्थवस्तुनि संशयविपर्यासरूपं अज्ञानं तदेव कान्तारं—काननं तद्भञ्जने वारण!—कुञ्जर!।

तथा हि—

"क्लृप्तं व्याकरणं नवं विरचितं छन्दो नवं द्व्याश्रया-
लङ्कारौ प्रथितौ नवौ प्रकटितं श्रीयोगशास्त्रं नवम्।
तर्कः सञ्जनितो नवो जिनवरादीनां चरित्रं नवं
बद्धं येन न केन केन विधिना मोहः कृतो दूरतः॥"

'समान!' समस्तराजामात्यादिलोकैः कृतकनककमलचरणपूज!। जय त्वम्। 'आद्यदेव!' आद्या—मुख्या देवा यस्मात्। स्थाने स्थाने जिनायतनानां तेन कारितत्वात्। धर्मार्थकामद!' भक्तानां तत्कालमेव त्रिवर्गप्राप्तेः। 'महोदयवीरधीर!' महान्—करितुरगरथपदातिप्राचुर्येण गुरुः उदयः—साम्राज्यं यस्य स चासौ वीरश्च वीरः चतुर्दिगन्तनृपतीनां अर्णोराजप्रभृतीनां पराजये शूरः, अर्थात् चक्रवर्त्तिश्रीकुमारपालदेवः तस्य धियं—निर्वीराधनमुक्तिमद्यमृगयाद्यूतादिव्यसनवारण—सर्वसत्वाभयदान—सर्वस्थानजिनभवनप्रधानां धर्मबुद्धिं राति। प्रभावपरम!' प्रभावः—सकलतीर्थिकावर्जनमाहात्म्यं तेन परम!—प्रकृष्ट!। 'आगमसिद्ध!—सैद्धान्तिकशिरोमणे!'॥ ९३॥

अथ विक्रमतुलितनरसिंहदेवः श्रीजयसिंहसूरिः—

' हरे ! ' अरिकरिशिरः कपाटपाटनपटुतया सिंह !। ' जयाय !' जयशब्दपूर्व ! जयसिंहदेव !। ' कल्याणसार !' सुवर्णसिद्धिप्रधान !। 'सवितान ! ' वयः—कुक्कुटाः पक्षिणस्तेषां तानो—विस्तारस्तेन सह वर्त्तते युद्धार्थं कुर्कुटान् दधौ इत्यर्थः । यदुक्तं श्रीकविराजेन—

" रे भूपाः ! कविराज एष भवतो जल्पत्युदश्चद्भुजः

पूज्या वध्रचरणायुधाः परममी युष्मत्कुले देवताः ।

यद्युद्धोत्सवदर्शनैकरसिकः श्रीताम्रचूडध्वजो

देवः पश्यत नाऽधुनापि रचयत्येकातपत्रां महीम् ॥ "

' अक्षमोह ! ' अक्षैः—पाशकैर्मोहयति—द्यूतक्रीडया परान् पराजयत इत्यर्थः । दुर्बोधद्यूतवैशारद्येन सकलकलाकुशल इति लक्ष्यम् । ' कान्त ! ' कमनीय !। ' आरवारणसमान ! ' आरं—अरिसमूहस्तद्वारणे समान—साहङ्कार !, धाराधिपयशोवर्मादिरिसमूहं गुप्तिक्षिप्तं निर्गच्छन्तं निवारयतीत्यर्थः । ' धर्मार्थकामदमहोदय ! ' त्रिवर्गप्रद !। कनकलाभात् महस्य—परमोत्सवलक्षणस्य उदय—उन्नतिर्यस्मात् । अद्यापि तत्प्रवर्तितस्य कनकदानप्रधानस्य रमोत्सवस्य प्रधानत्वात् । ' वीर ! ' एकान्तवीर !। ' धीर ! ' साहसिकप्रकाण्ड । यदुवाच श्रीकविराजः—

" एकान्तवीरतिलको भुवनैकमल्लः सिद्धाधिपः परमसाहसिकप्रकाण्डः। दर्पान्धबर्बरकजिष्णुरवन्तिनाथ इत्यूर्जितैर्जयति नामभिरेव देवः ॥ "

'सोमप्रभ !' सोमः—वंशाद्यपुरुषस्तस्येव प्रभा यस्य। 'अव'रक्ष जगदिति

गम्यम् । ईदृक्षस्य जगद्रक्षाक्षमत्वात् । 'परमागम !' परेषां—शत्रूणां मां-लक्ष्मीं आगमयति—करितुरगसनाथां प्रत्यर्थिपार्थिवराज्यश्रियं आनीतवानित्यर्थः। 'सिद्ध !' साधितविविधसिद्धितया सिद्धराज ! ।'सूरे !' समस्तशास्त्रविचक्षण ! ॥ ९४ ॥

**अथ बलवद्रिपुविजयोद्रिक्तशक्तियुक्ततया तुलितकुमारः श्रीकुमारपालदेवः—**

हे 'सवितानहर !' सवितानः—ससन्तानः हरः—शङ्करो यस्मात् स सवितानहरः—कुमारः, कुमारेणैव पुत्रेण हरस्य ससन्तानत्वात्। ततः कुमारः देवशब्दस्य नृपपर्यायत्वात् कुमारनृपते ! 'अजयाद्य !।' अजयः—अजयदेवः क्ष्मापतिस्तस्य आद्य!—प्रथम!। अव—रक्ष। कान् ? 'समान्—सर्वान्।' 'समसिमौ सर्वार्थौ' ( सिद्धहे० १। ४ ।४४ ) इति पाठात् । जिनधर्मप्रधानतया प्रतिषिद्धपापर्द्धेः तव पटहदानपूर्वं सर्वसत्वरक्षणमनुमतं मम इत्यर्थः । 'कल्याणसार !' कल्याणानि—जिनानां च्यवन-जन्म-दीक्षा-निर्वाणदिनोत्सवास्तेषु तपश्चरण—ब्रह्मचर्य—पूजानिमित्त—वित्तव्ययकरणेन सार—श्रेष्ठ !। यदवोचामः—

" चौलुक्येन्द्रेण चैत्ये कुचकलशभरैर्बन्धुराः सिन्धुरस्त्री-
स्कन्धारूढा विधातुं जिनजननमहे सूतिकर्मप्रपञ्चम् ।
षट्पञ्चाशत्समीरप्रमुखनिजनिजाचारचातुर्यवर्याः
स्फुर्जन्माणिक्यरत्नाभरणकवचिताश्चक्रिरे दिक्कुमार्यः ॥"

( )

द्वात्रिंशत् त्रिदशाधिपा नृपगृहाच्चैत्ये द्विपाध्यासिताः
कल्याणाभरणाभिरामवपुषः कल्याणका[illegible] ।

स्तोत्रं कर्तुममर्त्यशैलशिरसि स्वर्गादिवाभ्याययु-
स्तन्मध्ये च कुमारपालनृपतिर्भेजेऽच्युतेन्द्रश्रियम् ॥ ”

( )

‘ ईक्ष ! ’ यथावस्थितदेवगुरुधर्मवीक्षक !। ‘ मोहकान्तारवारण !’ मोहाय-विपर्यासाय यः कान्तासु-स्त्रीषु आरः-गमनं तस्य वारण !-निषेधक !, प्रतिवर्षं वर्षाकालमासचतुष्टयं शेषकालेऽप्यष्टमीचतुर्दश्यादिपर्वसु त्रिविधत्रिविधेन ब्रह्मचर्यं चकार इत्यर्थः । ‘ धर्मार्थ ! ’ धर्महेतो!, द्यूतमद्याद्यधर्मनिषेधेन सर्वत्र जिनायतनानि जिनरथयात्राश्च कारितवान् इत्यर्थः । ‘ कामदमहोदय ! ’ कामदं-वाञ्छितार्थप्रदं महः-तेजो दया च-करुणा च यस्य । तेजसा दुष्टानुत्थानात् कृपया सर्वसत्वरक्षणात् जगतो वाञ्छितार्थान् व्यधाद् इत्यर्थः । ‘ वीर ! ’ अर्णोराज-वल्लालदेव-मल्लिकार्जुन-सोमेश्वर प्रभृति चतुर्दिगन्तपरिपन्थिपराजयैकशूर ! । ‘ धीर ! ’ साहसिकचूडामणे !। ‘सोमप्रभ !’ सोमा-सत्कीर्त्तिः प्रभा यस्य । ‘ परमागमसिद्धसूरे ! ’ स्वपरसिद्धान्ताधिगमसिद्धः सूरिः श्रीहेमचन्द्रनामा धर्माचार्यो यस्य ॥ ९५ ॥

अथ मौढमतापमात्रस्नुत्रितशत्रुधरित्रीपराजयः श्रीअजयदेवः—

हे ‘ देव ! ’ ‘ अजयाद्य ! ’ अजय इति शब्द आद्यो यस्य तेन अजयदेव !। ‘ कल्याणसार ! ’ कलिः-करिमल्लाङ्कयुद्धं तस्य आणः-कोलाहलस्तेन सार !-श्रेष्ठ !। ‘ सवितानहर ! ’ सवितानः-सविस्तारः हरः-शङ्करो यस्मात् । परमार्हतश्रीकुमारपालदेवप्रतिषिद्धं पृथिव्यां शिवधर्मं प्रवर्त्तितवान् इत्यर्थः । ‘ ईक्षमोह ! ’ ईक्षो-दर्शनं तस्मात् मोहो-रागो यस्य । यां यां राजकन्यां ददर्श तां तां पर्यणैषीद् इत्यर्थः ।

१ °रिपु° ख ।

